श्रीगणेशाय नमः।

# वृहद्देवता।

## प्रथमोऽध्यायः।

मन्त्रदृग्भ्यो नमस्कृत्य समाम्नायानुपूर्वशः ।
सूक्तर्गर्धर्चपादानामृचु[१] वक्ष्यामि दैवतम् ॥ १ ॥
वेदितव्यं दैवतं हि[२] मन्त्रे मन्त्रे प्रयत्नतः ।
दैवतज्ञो हि मन्त्राणां तदर्थमधिगच्छति[३] ॥ २ ॥
तद्विदां[४] तदभिप्रायानृषीणां मन्त्रदृष्टिषु ।
विज्ञापयति विज्ञानं कर्माणि विविधानि च ॥ ३ ॥
न हि कश्चिदविज्ञाय याथातथ्येन दैवतम्[५] ।
लौकिकानां वैदिकानां[६] कर्मणां फलमश्नुते ॥ ४ ॥
प्रथमो भजते त्वासां वर्गोऽग्निमिह दैवतम् ।
द्वितीयो वायुमिन्द्रं वा तृतीयः सूर्यमेव च[७] ॥ ५ ॥
अर्थमिच्छन्नृषिर्देवं यं यमाहायमस्त्विति ।

---

(१) ऋराभ्य इति ख॰ ग॰ ङ॰ ।
(२) वेदितव्यं हि तत् सर्व्वमिति क॰ घ॰ ।
(३) तदर्थमविगच्छति इति ख॰ ।
(४) तद्विद्यानिति ख॰ घ॰ ।
(५) देवताः इति क॰ घ॰ ।
(६) लौक्यानां वैदिकानां वा इति ख॰ ग॰ ङ॰ ।
(७) सूर्य्यमेव तु इति क॰ घ॰ ।

सम्पूर्णमृषिवाक्यं तु सूक्तमित्यभिधीयते ।
दृश्यन्ते देवता यस्मिन्नेकस्य(१) बह्वपु दयो: ॥ १२ ॥
देवतार्षार्थच्छन्दोभ्यो(२)वैविध्यं तस्य जायते(३) ।
ऋषिसूक्तन्तु यावन्ति सूक्तान्येकस्य(४) वै स्तुतिः ॥ १४ ॥
देवतैका तु यावत्सु देवतायास्तदुच्यते(५) ।
यावदर्थसमाप्ति स्यादर्थसूक्तं वदन्ति तत् ॥ १५ ॥
समानच्छन्दसो यास्तु(६) तच्छन्दःसूक्तमुच्यते ।
वैविध्यमेतत्सूक्तानामिह(७) विद्याद्ययातयम् ॥ १६ ॥
देवतानामधेयानि मन्त्रेषु त्रिविधानि तु ।
सूक्तभाञ्ज्यथ ऋग्भाञ्जि तथा नैपातिकानि तु ॥ १७ ॥
सूक्तभाञ्जि भजन्ते वै सूक्तान्यृग्भाञ्जि वै(८) ऋचः ।
मन्त्रेऽन्यदैवतेऽन्यानि(९) निगद्यन्ते प्रसङ्गत·(१०) ॥ १८ ॥

---

(१) चित्रं यद्दृश्यते यस्मिन्नेतस्यामिति क० घ० । एकस्येत्यत्र एकस्मि-न्निति घ० ।
(२) देवतार्षार्थच्छन्दस्त इति ख० ।
(३) वैविध्यञ्च प्रजायते इति ख० ग० ङ० ।
(४) ऋषिसूक्तानि तान्यत्र यावन्त्येकस्येति क० घ० ।
(५) अस्मिन् श्लोकार्द्धस्थले ख० ग० ङ० पुस्तकेषु श्रूयन्ते तानि सर्वाणि ऋषेः सूक्तं हि तस्य तत् इति पाठो वर्त्तते ।
(६) या स्तुरिति ख० ग० ङ० ।
(७) वैविध्यमेवं सूक्तानामिहेति ख० ग० ङ० ।
(८) वै इत्यत्र यैरिति क० ख० घ० ङ० ।
(९) यानि इति घ० ।
(१०) निगद्यन्तेऽत्र कानिचित् इति ख० ग० पुस्तकान्तरञ्च ।

सालोक्यात्साहचर्याद्वा तानि नैपातिकानि तु।
तस्मादङ्गप्रकारेऽपि[1] सूक्ते स्यात्सूक्तभागिनी ॥ १९
देवता तद्यथासूक्तमविशेषं[2] प्रतीयते।
भिन्ने सूक्ते[3] वदेदेव देवतामिह लिङ्गतः ॥ २० ॥
तत्र तत्र यथावच्च मन्त्रान् कर्मसु[4] योजयेत्।
देवतायाः परिज्ञानात्तद्धि कर्म समृध्यते ॥ २१ ॥
आद्यन्तयोस्तु सूक्तानां प्रसङ्गपरिकीर्त्तनात्।
स्तोत्रभिर्देवतास्तास्ता उपेक्षेतेह[5] मन्त्रवित् ॥ २२ ॥
तत् खल्वाहुः कतिभ्यस्तु कर्मभ्यो नाम जायते।
सत्वानां[6] वैदिकानां च[7] यदन्यदिह[8] किञ्चन ॥२३।
नवभ्य इति नैरुक्ताः पुराणाः[9] कवयश्च ये।
मधुकः श्वेतकेतुश्च[10] गालवश्चैव मन्यते[11] ॥ २४ ॥
निवासात्कर्मणो रूपान्मङ्गलाद्वाच आशिषः।

---

(१) अङ्गप्रकाशेऽपि इति क॰ ङ॰ घ॰।
(२) अविशेष्येति ख॰, अविशेष्यमिति ग॰ ङ॰ पुस्तकान्तरञ्च।
(३) भिन्नसूक्ते इति क॰ घ॰।
(४) कर्म प्रयोजयेदिति ख॰।
(५) देवतानाम्ना उपेक्षेतेह इति ख॰। देवतानाम्नामपेक्षेतेह इति क॰ घ॰।
(६) सत्वानामिति क॰।
(७) वा इति क॰ ग॰।
(८) यद्वान्यदिहेति क॰ घ॰।
(९) पौराणा इति क॰ घ॰।
(१०) मधुकश्च तकेतश्चेति क॰ घ॰।
(११) मन्यते इति क॰ ख॰ घ॰ ङ॰।

यदृच्छयोपवसना[१]त्तथामुष्यायणाज्जपात्[२] ॥ २५ ॥
चतुर्थं इति तचाङ्योस्तुगार्ग्यरथीतराः[३] ।
आशिषोऽयार्थवैरूप्या[४] द्वाचः कर्मण एव च ॥ २६ ॥
सर्वाण्येतानि नामानि कर्मणस्त्वाह[५] शौनकः ।
आशीरूपञ्च वाक्यञ्च[६] सर्वं भवति कर्मतः ॥ २७ ॥
यदृच्छयोपवसना[७] त्तथामुष्यायणाच्च[८] यत् ।
तथा तदपि कर्मैव तत्कृणुध्वमु[९] हेतुतः[१०] ॥ २८ ॥
प्रजाः कर्मसमुत्था[११] हि कर्मतः सत्वसङ्गतिः[१२] ।
कचित् संज्ञायते[१३] सत्त्व निवासात्तत्प्रजायते[१४] ॥२९॥
यादृच्छिकं तु नामाभिधीयते[१५] त्विह कुचचित्[१६] ।

---

(१) यदृच्छयोपवचनादिति क॰ ङ॰ घ॰ ।
(२) तथा त्वष्यायणाच्चेति क॰ घ॰ ।
(३) रथन्तरा इति ख॰ ।
(४) व्याशिषोऽथ च वैरूप्यात् इति क॰ घ॰ । व्याशिषोऽर्थवैरूप्यादिति ख॰ ङ॰ ।
(५) कर्मतस्त्वाह इति क॰ ग॰ ।
(६) वाच्यस्य इति ख॰ ग॰ ङ॰ ।
(७) यदृच्छयोपवचनादिति ख॰ ।
(८) यदृच्छया निवासाच्च यद्वा त्वष्यायणाच्चेति क॰ घ॰ ।
(९) तत्कृणु त्वं च इति ग॰ ।
(१०) हेतवः इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।
(११) प्रजाकर्मसमुत्था इति क॰ ख॰ ।
(१२) कर्मणः सत्व जायते इति क॰, सत्वगा गतिः इति ख॰ ।
(१३) सतो निवसते इति क॰ घ॰, क्वचित् स जायते इति ग॰ ।
(१४) तत्र जायते इति घ॰ ।
(१५) नाम नामाधीयते इति ख॰ । यादृच्छिकं नाम नाम धीयते क॰ ङ॰ ।
(१६) यत्र कुत्रचिदिति ख॰, यत्त्विह क्वचिदिति घ॰ ।

औपम्यादेव[1] तद्विद्याद्[2] भावस्यैवेह कस्यचित् ॥ २० ॥
नाकर्मकोऽस्ति भावो हि न[3] नामास्ति[4] निरर्थकम्
नान्यच्च भावान्नामानि तस्मात्सर्वाणि कर्मतः ॥ २१ ॥
मङ्गलात् क्रियते यत्तु नामोपवसनाच्च[5] यत् ।
भवत्येव तु सा ह्याशीः स्वस्त्यादेर्मङ्गलानि च[6] ॥ २२
अपि कुत्सितनामाय[7]मिह[8] जीवेत्कथञ्चिरम् ।
इति क्रियन्ते नामानि भूतानां विदितान्यपि[9] ॥ २३
मन्त्रा नानाप्रकाराः स्युर्दृष्टा वै[10] मन्त्रदर्शिभि· ।
स्तुत्या चैव विभूत्या च वाक्प्रभावेण चात्मनः[11] ॥ २४
स्तुतिः प्रशंसा निन्दा च संशयः परिदेवना[12] ।
स्पृहाशीः कत्थना याञ्चा[13]प्रश्नः प्रैषः प्रवह्लिका[14] ॥ २५..
नियोगश्चानुयोगश्च श्लाघा विलपितञ्च यत् ।

---

(१) औपम्यादपीति ख॰, औपम्यादिह इति ग॰ घ॰ ङ॰ ।
(२) तद्वत्ते इति घ॰ ।
(३) ना इति घ॰ ।
(४) तन्नामाच्च निरर्थकमिति ख॰ ।
(५) यच्च नामोपवचनच्च इति क॰ ख॰ घ॰ ।
(६) आशास्ते मङ्गलानि च इति क॰ घ॰ । मङ्गलादिहेति ख॰ ङ॰ ।
(७) अचिकित्सितनामायमिति ख॰ ।
(८) अपि इति घ॰ ।
(९) निन्दितान्यपि इति क॰ घ॰ ।
(१०) ये इति ग॰ ङ॰ पुस्तकान्तरच्च ।
(११) प्रभावाद्देवतात्मन इति ख॰ ग॰ अन्यत्पुस्तकच्च ।
(१२) परिवेदना इति क॰ ङ॰ ।
(१३) कथनायाच्ञेति क॰ ।
(१४) प्रवल्हिका इति ख॰ ग॰ ।

आचिख्यासा[१]ऽथ संलापाः पविचाख्यान[२]मेव च ॥ २६ ॥
आहनस्या नमस्कारः प्रतिरोध[३]स्तथैव च ।
सङ्कल्पश्च प्रलापश्च प्रतिवाक्यश्च नाम यत्[४] ॥ २७ ॥
प्रतिषेधोपदेशौ च प्रमादापक्रवौ च यत्[५] ।
उपप्रेषश्च यः प्रोक्तः सञ्ज्वरो नाम[६] विस्मयः ॥ २८ ॥
आक्रोशोऽभिलवश्चैवा[७]क्षेपः शापस्तथैव च ।
उपसर्गो निपातश्च[८] नाम चाख्यातमित्यपि[९] ॥ २९ ॥
भूतं भव्यं भविष्यच्च पुमांस्त्र्यथ[१०]नपुंसकम् ।
एवंप्रकृतयो मन्त्राः सर्ववेदेष्विति स्थितिः[११] ॥ ४० ॥
तेषां निदर्शनार्थीया[१२] ऋचोऽर्धर्चाः पदानि च ।
ब्राह्मणे चाथ कल्पे च निगद्यन्तेऽत्र कानिचित्[१३] ॥ ४१ ॥

---

(१) आविख्यासेति ख० ।
(२) सल्लापाः परित्राख्यानं इति घ० ।
(३) प्रतिरोधः इति घ० प्रतिषेध इति अन्यत्पुस्तकश्च ।
(४) तथैव च इति ग० अन्यत्पुस्तकश्च ।
(५) च ह इति ग० अन्यत्पुस्तकश्च ।
(६) यश्च इति ख० ग० ङ० अन्यत्पुस्तकश्च ।
(७) आक्रोशोऽभिष्टवश्चैव इति ग० अन्यत्पुस्तकश्च, आक्रोशोऽभिप्लवश्चैव इति ख० ।
(८) उपसर्गा निपाताश्चेति क० घ०, उपसर्गा निपातश्चेति ख० ।
(९) चाख्यानमेव चेति क० ।
(१०) स्त्री च इति ग० अन्यत्पुस्तकश्च ।
(११) सर्ववेदेषु सर्वशः इति ख० ग० ङ० अन्यत्पुस्तकश्च । सर्वदेवेष्विति स्थितिरिति घ० ।
(१२) वाक्यार्थदर्शनार्थीया इति ङ० अन्यत्पुस्तकश्च ।
(१३) विधौ कल्पे च देवे च निगद्यन्तेऽत्र कर्हिचिदिति क० घ० ।

शब्देनोच्चरितेनेह येन द्रव्यं प्रतीयते ।
तदाक्षरविधौ युक्तं नामेत्याहुर्मनीषिणः ॥ ४२ ॥
अष्टौ यत्र प्रयुज्यन्ते नानार्थेषु विभक्तयः[1] ।
तन्नाम कवयः प्राहुर्भेदे वचनलिङ्गयोः ॥ ४३ ॥

क्रियासु बह्वीष्वभिसंश्रितो यः
पूर्वापरीभूत इहैक एव ।
क्रियाभिनिर्वृत्तिवशेन सिद्ध
आख्यातशब्देन तमर्थमाहुः ॥ ४४ ॥

क्रियाभिनिर्वृत्तिवशोपजातः
कृदन्तशब्दाभिहितो यदा स्यात् ।
सङ्ख्याविभक्तव्ययलिङ्गयुक्तो
भावस्तदा द्रव्यमिवोपलक्ष्यः[2] ॥ ४५ ॥

यथा नानाविधैः शब्दैरपश्यन्नृषयः पुरा ।
विविधान्यपि[3] वाक्यानि तान्यनुक्रमतः शृणु ॥ ४६ ॥
रूपादिभिः स्तुतिः प्रोक्ताऽऽशीर्भिः[4] स्वर्गादिभिस्तथा ।
यानि वाक्यान्यतोऽन्यानि[5] तान्यपि स्युरनेकधा ॥ ४७ ॥

---

(१) विभक्तय इति ग० पुस्तकस्थ ।
(२) शब्देनेत्यादि भावस्तदा द्रव्यमिवोपलक्ष्यः इत्यन्तः सन्दर्भः क० घ० चिह्नितपुस्तकयोर्नोपलभ्यते ।
(३) विविधानीह इति ख० ग० घ० ।
(४) आशीरिति क० ख० ग० ।
(५) यानि इति घ० पुस्तकस्थ ।

मन्त्रे(१) प्रशंसा(क) भोजस्य(२) चित्रवत्(ख) सौभरेः(३)(ग)स्तुतिः।
आक्रोशार्थास्तु दृश्यन्ते (घ)माता चेत्यभिमेथति(४) ॥४८॥
स्वक्रोधमन्त्रं(ङ) निन्दा च(५) प्राप्रा(च) येमेत्यृगेव तु।
याज्ञा(६) (छ)यदिन्द्रचित्रेति चेपो भीदमिति त्वृचि ॥४९॥
आशीस्तु(ज) वात आवातु दण्डेति परिदेवना(७)।
प्रश्नश्च प्रतिवाक्यञ्च(झ) पृच्छामि त्वेत्यृचौ पृथक् ॥५०॥
संशयोऽधःस्विदासीच्च(ञ) कत्यना(ट) स्या(ठ)दहं मनुः।
इमं नो(ठ) यज्ञमित्यस्यां(ड) नियोगः(९) पाद उच्यते(१०) ॥५१॥

---

(१) मन्त्रः इति क० घ०।
(२) प्रसङ्गाक्रोशस्य इति क० घ० मन्त्रप्रशंसा भोजस्येति ग०।
(३) सौभरस्तुतिरिति ख०।
(४) मा नामेत्याभिमेध्यति इति ख०, माता मेत्यभिमेथति इति क०ङ०।
(५) स्वमोघमन्नतिदाच इति ख०।
(६) यास्यां इति ख०, याञ्चा इति ग०, यचना इति घ० ङ०।
(७) दण्डादिपरिवेदना इति घ०, दण्डेतिपरिवेदना इति ख० च०।
(८) संशयोधः स्विदासीदिव्कथना इति क० घ०, कच्छना इति ङ०।
(९) यज्ञमित्याद्यानियोगः इति ख०।
(१०) उत्तमे इति क० घ०।

---

(क) ऋ० १०,१०७,१०। (ख) ऋ० ८,२१,१८। (ग) ऋ० ८,१९, २। (घ) ऋ० १,१९०, २१; १८५,१०। (ङ) ऋ० १०, ११७, ६। (च) ऋ० ८, २७,२०। (छ) ऋ० ५,३९, १। (ज) ऋ० १०,१८६, १। (झ) ऋ० १, १६४, ३४। (ञ) ऋ० १०, १२९, ५। (ट) ऋ० ४, २६, १। (ठ) ऋ० १, १, ४। (ड) ऋ० १, २६, १।

[क]इह ब्रवीत्यनुयोगः संलाप[1]स्तृगुपोपमे[2][ख] ।
प्रतिषेधोपदेशौ[3] तु अचेमेत्य[ग]चसंस्तुतौ[4] ॥५ २॥
आख्यान[5]न्तु हये जाये[घ] विलापस्तु[6]नदस्य मा[ङ] ।
अवीरामिव मा[च] श्लाघा[7] सुदेव इति[छ] तु स्पृहा ॥५ ३॥
नमस्कारः[ज] शुन.शेपे,[8] नमस्ते अस्तु विद्युते ।
सङ्कल्पयन्निदं तुल्योऽहं स्यामिति यदुच्यते[9] ॥५ ४॥
सङ्कल्पस्तु[झ] यदिन्द्राहं सन्तापस्त्वेतयस्य तु.[ञ][10] ।
महानग्न्याहनस्था तु प्रतिरोधो भुगित्युत[11] ॥५ ५॥

---

(१) सल्लाप इति क० ग० घ० ।
(२) ऋगुपोपमे इति ख० ग० अन्यत्पुस्तकस्य ।
(३) प्रतिषेधापदेशौ इति घ० ङ० ।
(४) अचेरित्यच्चसंस्तुत, इति घ० ।
(५) आख्यातमिति पुस्तकान्तरम् ।
(६) स्यादिति ख० ग० पुस्तकान्तरस्य ।
(७) अवीरामात्मन. श्लाघा इति ख० ग० घ० ।
(८) नमस्कारो मत ऋषे इति क० घ० शेष इति ख०, शेषे इति ङ० ।
(९) यां कल्पयन्ति नो रय' परिभाख्यमिह ते इति क० ।
(१०) यः इति ख० ग० ङ० पुस्तकान्तरस्य ।
(११) महानग्न्याह नम्यासात्प्रतिरागो भुगित्यपि इति ख०, भुगित्यपि इति ग०, भुगित्यमि इति पुस्तकान्तरं ।

---

(क) ऋ० १, ३५, ६ । (ख) ऋ० ८, ८२, ४ । (ग) ऋ० १०, ३७, ११ । (घ) ऋ० १०, ९५, १ । (ङ) १, १०९, ४ । (च) ऋ० १०, ८६, ९ । (छ) ऋ० १०, ९४, १४ । (ज) ऋ० १, २४, १२, १३ । (झ) ऋ० ८, १४, १ । (ञ) ऋ० ६, १५, ४ ।

प्रमादस्त्वेष[१]ह्नन्ताहं[क] नमस्व[ख] इत्यभिप्लवः[२]।
इन्द्राकुत्सेत्युपप्रैषो[ग][३] न विजानामि[घ] संज्वरः ॥ ५६ ॥
होतापचदिति प्रैषः[४] को ग्रहीति तु विस्मयः।
जामन्व[५]पक्कवो नेति वितताद्विः[ङ] प्रवह्लिका[६] ॥ ५७ ॥
[च]न मृत्युरासीदित्येतामाचिख्यासां[७] प्रपद्यते[८]।
*अभिशापो[९]प्रजाः सन्तु भद्र[१०]मागोस्तु[छ] गोतमे[११] ॥ ५८ ॥
यक्षयेवं प्रकार[१२]न्तु शक्यं द्रष्टुमिहार्षजम्[१३]।

---

(१) प्रमोदस्त्वेष इति घ०।
(२) प्रमादस्त्वेकह्नन्ताहं नमस्व इत्यन्दव इति ख०, नसख इत्यपन्दवः इति ग०।
(३) इन्द्राकुत्सेत्यपप्रैषो इति ख०, इन्द्राभरेत्युपप्रैषो इति क० ङ०।
(४) होतापचदितिप्रैषा इति ख०।
(५) जामये इति घ०, जामनु इति ग०, यामनु इति ख०।
(६) प्रवल्हिका इति ख० ग०।
(७) नाचिख्यासमिति क०, माविह्यासामिति ख०,माचिख्यासमिति घ०।
(८) प्रपद्यसे इति क०, प्रपद्यमे इति ख०।
(९) ध्याविशापोः इति ख०।
(१०) सदमिति ख०।
(११) इगौतमे इति ख०।
(१२) अध्यमेव प्रकारमिति ख०।
(१३) इतीदृशमिति ख० ग० पुस्तकान्तरञ्च।

---

(क) ऋ० १०, ११९, ६। (ख) ऋ० ७, ३८, १०। (ग) ऋ० ५, ३१, ८। (घ) ऋ० १, १६४, ३७। (ङ) ऋ० १, १५२, ४। (च) ऋ० १०, १२९, २। (छ) ऋ० १, ७८, १०।

वक्तुं प्रयोगतश्चैषामृक्सूक्तार्धर्चसंश्रितम्[१] ॥ ५९ ॥
एते तु मन्त्रवाक्यार्था देवतां सूक्तभागिनीम्[२] ।
संश्रयन्ते[३] यथान्यायं स्तुतिस्तत्रानुमानिकी[४] ॥ ६० ॥
भवद्भूतं भविष्यच्च जङ्गमं स्थावरञ्च यत्[५] ।
अस्यैके[६]सूर्यमेवैकं प्रभवं प्रलयं विदुः ॥ ६१ ॥
[क]असतश्च [ख]सतश्चैव [ग]योनिरेषा[७] [घ]प्रजापतिः ।
यदक्[८]षरञ्चा[च]व्यय[ङ]ञ्च यच्चैत[छ]द्ब्रह्म[९]शाश्वतम् ॥ ६२ ॥
कृत्वैव[१०] हि[ज] त्रिधा[झ]त्मानमेषु लोकेषु [ञ]तिष्ठति।

---

(१) ऋक्सूक्तार्धर्चशस्त्विति इति क०, चैषा युक्सुक्तार्धर्चसंश्रित मिति ख० ।
(२) देवतां सूक्तभागिनामिति क० घ०, देवता सूक्तभागिनी इति ख० ।
(३) संभूयते इति ख० ।
(४) स्वा थानुमानिकी इति ख०, तत्रानुमानिकी इति घ० ।
(५) भवद्भूतस्य भव्यस्य जङ्गमस्थावरस्य च इति ख० ग० पुस्तकान्तरञ्च।
(६) एते इति क० घ० ।
(७) एषामिति क० ।
(८) यदक्षरञ्च वाच्यमिति ग०, वाक्यमिति ङ० पुस्तकान्तरञ्च ।
(९) यच्चैतद्ब्रह्म इति ग० ङ० पुस्तकान्तरञ्च ।
(१०) कृत्वैष इति ख० ग० पुस्तकान्तरञ्च ।

---

(क) ऋ० ५, १२, ४ । (ख) ऋ० १, ३६, ९ । (ग) ऋ० १, १०४, १ । (घ) ऋ० ४. ५३, २ । (ङ) ऋ० १, १६४, ४२ । (च) ऋ० ६, ६७, ९ । (छ) ऋ० १, १०, ४ । (ज) ऋ० १, ११७, २४ । (झ) ऋ० १, १६९, ६ । (ञ) ऋ० १, ५१, ११ ।

(क)देवान् यथायथं(ख) सर्वान् निवेश्य(ग) स्वेषु(घ) रश्मिषु ॥ ६ ३॥
एतद्भूतेषु(१) लोकेषु अग्निभूतं स्थितं त्रिधा।
(ङ)ऋषयो (च)गीर्भि(छ)रर्चन्ति व्यञ्जितं(२) (ज)नामभि(झ)स्त्रिभिः॥ ६ ४॥
तिष्ठत्येव च(३) (ञ) भूतानां(ट) जठरे जठरे ज्वलन्।
त्रिस्थानं चैनमर्चन्ति होत्रायां(ठ) वृक्तबर्हिषः ॥ ६ ५ ॥
इह्वैष(ड) पवमानो(ढ)ऽग्नि(४)र्मध्यमोऽग्निस्तु(ण) पावकः(५)।
असुमिन्नेव(६) विभिस्तु लोकेऽग्निः(त) शुचिरुच्यते ॥ ६ ६ ॥
इहाग्निभूतस्त्वृषिभिर्लोके स्तुतिभिरीडितः(७)।
(थ)जातवेदाः स्तुतो मध्ये स्तुतो(द) वैश्वानरो दिवि ॥ ६ ७ ॥

---

(१) एतमेवेषु इति क० घ०।
(२) व्यञ्जनमिति ङ० घ० पुस्तकान्तरञ्च।
(३) एष च इति ख०, एष हीति ग० पुस्तकान्तरञ्च।
(४) पवमानाग्निरिति क० घ०।
(५) वनस्पतिरिति ख० ग० ङ० पुस्तकान्तरञ्च।
(६) चमुष्मिन्नेव इति ग० ङ० पुस्तकान्तरञ्च।
(७) ईलितः इति क० ख० ङ०।

---

(क) ऋ० १, १, २। (ख) ऋ० १, १६१, ८। (ग) ऋ० ८, ८४, ८। (घ) ऋ० १, १३४, ४। (ङ) ऋ० १, ४८, १४। (च) १, ६, ६। (छ) ऋ० १, १०, १। (ज) ऋ० १, १५५, ६। (झ) ऋ० ८, ५६, ५। (ञ) ऋ० ३, २७, ६। (ट) ऋ० १, १०४, ६। (ठ) ऋ० १, ३, ३। (ड) ऋ० ८, १०१, १४। (ढ) ऋ० १, १, २। (ण) ऋ० १, ६०, ४। (त) ऋ० १, ६६, १। (थ) ऋ० १, ७७, ५। (द) १, ५६, ६।

[क]रसान् रश्मिभि[ख]रादाय[ग] वायुनाऽयं गतः सह[१] ।
[घ]वर्षत्येष च यल्लोके[ङ] तेने[च]न्द्र [छ]इति स स्तुतः[२] ॥ ६८ ॥
[ज]अग्नि[झ]रस्मि[ञ]न्नथेन्द्रस्तु मध्यमो[३][ट]वायुरेव च ।
[ठ]सूर्यो [ड]दिवीति विज्ञेयास्तिस्र एवेह[४] देवताः ॥ ६९ ॥
एतासामेव माहात्म्यान्नामान्यत्वं विधीयते ।
तत्तत्स्थानविभागेन तत्र तत्रोपलक्षयेत्[५] ॥ ७० ॥
[ढ]तासा[ण]मियं [त]विभूतिर्हि [थ]नामानि यदनेकशः ।
[द]आहुस्तासान्तु मन्त्रेषु[ध] कवयोऽन्योऽन्ययोनिताम्[६] ॥ ७१ ॥
यथास्थानं[न] प्रदिष्टास्ता[७] नामान्यत्वेन देवताः ।

---

(१) सह संस्तुत इति क० घ० ।
(२) तु स्तुतः इति क० घ० ।
(३) मध्यत इति ग० ।
(४) एवहि इति क० घ० ।
(५) तत्र तत्रेह दृश्यते इति ग० ङ० पुस्तकान्तरञ्च ।
(६) अन्योऽन्ययोगितामिति ख० ।
(७) स्तु इति क० ।

---

(क) ऋ० १, १९, ८ । (ख) ऋ० ४, २६, ६ । (ग) ऋ० १, १४, १० ।
(घ) ऋ० ५, ८४, ३ । (ङ) ऋ० १, २१, ६ । (च) ऋ० १, २, ५ ।
(छ) ऋ० १, १०९, ३ । (ज) ऋ० १, १, २ । (झ) ऋ० १, ९, ९ ।
(ञ) ऋ० १, ४, ३ । (ट) ऋ० १, १३४, ३ । (ठ) ऋ० १, २३, १७ ।
(ड) ऋ० १, ६, १ । (ढ) ऋ० १, ३२, ८ । (ण) ऋ० १, ४८, ७ ।
(त) ऋ० १, ३०, ५ । (थ) ऋ० १, ७२, ३ । (द) ऋ० १, ११८, ३ ।
(ध) ऋ० ५, ५७, ८ । (न) ऋ० ३, ३०, १९ ।

तद्भक्तास्तत्प्रधानाश्च(क) केचिदेवं वदन्ति ताः(१) ॥ ७२ ॥
(ख)पृथक् (ग)पुरस्ताद्ये तूक्ता(२) लोकादिपतय(घ)(३)स्त्रयः ।
(ङ)तेषा(च)मात्मैव तत्सर्वं यद्यद्भक्तिः प्रकीर्त्यते(४) ॥ ७३ ॥
तेजस्त्वे(छ) वायुधं(५) प्राहुर्वाहनञ्चैव तस्य तत्(६) ।
(ज)ऋचामैन्द्रीषु (झ)दिव्यासु (ञ)वाचमेवं पृथक् स्तुताम् ॥ ७४ ॥
बह्वदेवतायाः (ट)स्तुतयो द्वन्द्वशः स्तुतयश्च(७) याः ।
प्राधान्यमेव सर्व्वासु(८) पतीनामेव(९)(ठ) तास्वपि ॥ ७५ ॥

---

(१) नैवं केचिद्वदन्ति तु इति क० घ०, तु इत्यत्र ता इति पुस्तकान्तरं।
(२) येत्वूक्ता इति ख०, पुरस्ताधौक्ता इति घ०।
(३) लोकाधिपतय इति क० घ ।
(४) यदन्यद्भक्ति कीर्त्यते इति क० घ०।
(५) तेजस्ते वायव इति क० ङ०, वायवा इति ग०। तेजसे वायवा इति ख०, ।
(६) यस्य यत् इति क० ख० ग० ङ० पुस्तकान्तरञ्च।
(७) द्विवत्सं स्तुतयश्च इति ग० ङ० पुस्तकान्तरञ्च, द्विवत्सं ततयश्च इति ख०।
(८) प्राधान्यमेषा भूताना इति क० घ०।
(९) इव इति ख० ग० ङ०।

---

(क) ऋ० ५, ३७, २। (ख) ऋ० १, १३१, २। (ग) ऋ० १, १२३, १०। (घ) ऋ० १, ३४, २। (ङ) ऋ० १, २, १। (च) ऋ० १, ११५, १। (छ) ऋ० २, १५, ४। (ज) ऋ० १, ३१, १६। (झ) ऋ० ८, ८७, १७। (ञ) ऋ० १, ४०, ६। (ट) ऋ० ६, ३६, १। (ठ) ऋ० १, २८, ८।

[क]स्थानं [ख]नामानि भक्तीश्च[१] देवतायाः स्तुतौ स्तुतौ ।
सम्पादयन्नुपेक्षेत[२]याज्ञाश्चिदिह सम्पदम् ॥ ७६ ॥
अग्निभक्तिस्तु तान् सर्वान्[ग]ग्नावेव[३] समापयेत् ।
यदिन्द्रभक्ति तच्चैन्द्रे[४] [घ]सूर्ये[५] सूर्यानुगञ्च[ङ] यत् ॥ ७७ ॥
निरूप्यते[६] हवि[च]र्यस्मै[७] सूक्तन्तु [छ]भजते च [ज]या ।
[झ]सैव [ञ]तत्र प्रधानं स्यात्र[८]निपातैन [ट]याः [ठ]स्तुताः ॥७८॥
[ड]इति[९]त्रयाणामेतेषा[१०] [ढ]मुक्त' सामासिको विधिः ।
समासेनैवमुक्तस्तु[११] विस्तरेण त्वनुक्रमः[१२] ॥ ७९ ॥

---

(१) भक्तिश्चेति क॰ घ॰ ।
(२) संवादो यत्त्वपेक्षेत इति क॰ ।
(३) या सर्व्वामथावेव इति क॰ ।
(४) यदिन्द्रभक्तितस्चैन्द्रे इति क॰ घ॰ ।
(५) सौर्य्ये इति ङ॰ पुस्तकान्तरञ्च ।
(६) निरुप्यत इति घ॰ ।
(७) यस्मै इति घ॰ ।
(८) तत्र तत्र प्रधानोऽसौ न इति क॰ घ॰ ।
(९) इह इति क॰ घ॰ ।
(१०) एवैषामिति ग॰ ।
(११) समापयन्तु तत्सर्व्वमिति क॰ घ॰ ।
(१२) ह्यनुक्रमादिति घ॰ ।

---

(क) ऋ॰ ५, ७६, ४ । (ख) ऋ॰ १, ७२, ३ । (ग) ऋ॰ १, १२४, १ । (घ) ऋ॰ १, २३, १७ । (ङ) ऋ॰ १, १, ६ । (च) ऋ॰ १, १२, १ । (छ) ऋ॰ १, ६४, २ । (ज) ऋ॰ १, १२३, ४ । (झ) ऋ॰ १, २२, २ । (ञ) ऋ॰ १, ४८, १० । (ट) ऋ॰ १, ६, ६ । (ठ) ऋ॰ १, १०, ६ । (ड) ऋ॰ २, २३, १७ । (ढ) ऋ॰ ४, ३०, ७ ।

अवश्यं वेदितव्यो हि नाम्ना[१] [क]मर्थस्य विस्तरः ।
न हि [ख]नामान्यविज्ञाय [ग]मन्त्राः शक्या हि वेदितुम् ॥८०॥
सत्वान्यमूर्त्तान्यपि च [घ]देवता च[२] महर्षयः ।
तुष्टुवुर्ऋषयः शक्त्या[३][ङ] तासु तासु स्तुतिष्विह[च] ॥८१॥
यैस्त्वग्नि[४][छ]रिन्द्रः [ज]सोमश्च [झ]वायुः [ञ]सूर्यो [ट]बृहस्पतिः ।
[ठ]चन्द्रोऽथ[ड]विष्णुः[ढ]पर्जन्यः[ण]पूषा वा[५][त]ऽप्यृभवो[६][थ]ऽश्विनौ॥८२
[द]रोदसी [ध]मरुतो [न]देवाः[७] [प]पृथिव्यापः [फ]प्रजापतिः ।

---

(१) नाम्नां इति क० ङ०, नाम्नः इति घ० ।
(२) देवतावदिति क० घ० ।
(३) तुष्टुवुश्च प्रशंसन्वेति क० घ० ।
(४) यैरग्निरिति घ० ।
(५) वा इति ख० ङ० पुस्तकान्तरश्च ।
(६) पूषोषा भगवः इति क० घ० ।
(७) देव्यः इति क० घ० ।

---

(क) ऋ० १०,१२७,६ । (ख) ऋ० १, ७२, ३ । (ग) ऋ० ६,१०,१४ ।
(घ) ऋ० १, २२, ५ । (ङ) ऋ० २, २८, ६० । (च) ऋ० १, १, २ ।
(छ ऋ० १, १, २ । (ज) ऋ० १, २, ५ । (झ) ऋ० १, १८, ४ ।
(ञ) ऋ० १, १२४, ३ । (ट) ऋ० १, २३, १७ । (ठ) ऋ० १, १५०, ३ ।
(ड) ऋ० १, २२, १६ । (ढ) ऋ० ४, ५७, ८ । (ण) ऋ० १, २३, १४ ।
(त) ऋ० १, ११०, १ । (थ) ऋ० ५, ७५, ७ । (द) ऋ० १, १६७, ५ ।
(ध) ऋ० १, १५, २ । (न) ऋ० १, २३, १९ । (प) ऋ० १, २२,१६ ।
(फ) ऋ० ४, ५३, २ ।

(क)देवौ च (ख)मित्रावरुणौ पृथक् सह च ता(ग)वुभौ ॥८२॥
(घ)विश्वे च देवाः (ङ)सविता (च)त्वष्टा वै रूपकृत्मत:(१) ।
(छ)अश्वो (ज)ऽन्न(झ)मृत्विजो(ञ)वह्नो(२)(ट)ग्रावाणो रथसंयुतः(३) ॥८४॥
(ठ)स्तुताः पृथक् पृथक् (ड)स्वैः स्वैः सूक्तैर्ऋग्भिश्च(४) (ढ)नामभि ।
स्तुतौ स्तुतौ प्रवक्ष्यामि (ण)तानि (त)तेषामनुक्रमात् ॥८५॥
व्यवस्थे(थ)न्मन्त्रमाग्नेय लिङ्गै(द)रग्नेश्च(५) लक्षितम् ।
हविष्यद्भिः(६) प्रधानैश्च(७) नामाङ्कानेश्च केवलैः ॥८६॥

---

(१) रूपकृत्मुख इति घ० ।
(२) यच्च इति घ० ।
(३) रथसंयुग इति घ० ।
(४) सूक्तैर्मृत्तु च इति घ० ।
(५) तु इति घ० ।
(६) हविष्यद्भि इति ग० घ०, हविर्भाग्भिरितिपाठः समीचीन ।
(७) निरूप्यैश्चमिति घ० ।

---

(क) ऋ० ६, ५६, ५। (ख) ऋ० १, ३५, १। (ग) ऋ० १, १०८, ६। (घ) ऋ० १, ८६, १०। (ङ) ऋ० १, २२,८। (च) ऋ० १, ३२, २। (छ) ऋ० १, १६, ८। (ज) ऋ० १, १८७,२। (झ) ऋ० १, १६०, ३। (ञ) ऋ० १, ५१, ७। (ट) ऋ० १, ८६, ४। (ठ) ऋ० ४, ३७, ७। (ड) ऋ० १, १६८, ४। (ढ) ऋ० १, १५५, ६। (ण) ऋ० १, ५३, ६। (त) ऋ० १, २, १। (थ) ऋ० १, ३१, १३। (द) ऋ० १, २४, २।

ऐन्द्रस्तु[क][१] मन्त्रो[२] वायव्यैर्लिङ्गै[ख]रैन्द्रैश्च लक्ष्यते[३]।
नामधेयैश्च[४] [ग]वज्रस्य बलकृत्या बलेन च ॥ ८७ ॥
सौर्यस्तु लिङ्गैः[घ] सूर्यस्य[५] गुणैः सर्वैस्तु[६] तैजसैः।
[ङ]नामभिश्चैव[७] चन्द्रस्य सूक्तश्च[८] [च]भजतेऽत्र यैः[९] ॥ ८८ ॥
एतासां[१०] देवतानान्तु नामधेयानुकीर्त्तनैः।
[छ]यस्य यस्येह यावन्ति न व्यवस्यन्त्य[ज]तो[११][झ]ऽन्यथा ॥ ८९ ॥
[ञ]अयं प्रयोगस्त्वेतेषां[ट] ज्योतिषां[१२][ठ] त्रिषु[ड] वर्त्तते।

(१) ऐन्द्रैस्तु इति ख० घ०।
(२) मन्त्रै इति घ०।
(३) लक्षितमिति घ०।
(४) नामभिश्चैव इति क० घ०।
(५) सौर्य्यैश्च इति घ०।
(६) च इति ख० घ०।
(७) नामधेयैश्चेति ख० ग० ङ०।
(८) सूर्य्यन्तु इति क० घ०।
(९) य इति ङ० पुस्तकान्तरञ्च, अखिलैरिति घ०।
(१०) अन्यासामिति घ०।
(११) न व्यवस्यन्त इति ग० घ०।
(१२) ज्योतिःषु इति ख० घ०।

(क) ऋ० १, १८७, ४। (ख) ऋ० ३, ५३, ८। (ग) ऋ० ५, ३२, ७।
(घ) ऋ० १, १४, ६। (ङ) ऋ० १, १५५, ६। (च) ऋ० १, १२३, ४।
(छ) ऋ० १, ५, ४। (ज) ऋ० १, ६, ९। (झ) ऋ० ४, ३२, ८।
(ञ) ऋ० १, १६, ७। (ट) ऋ० १, ११३, १। (ठ) ऋ० १, १५, ४।
(ड) ऋ० १, ८९, २।

लोकेषु मन्त्रवि[क]द्विद्वान् प्रयोगेनावमीदति ॥ ८० ॥
[ख]नीयतेऽयं नृभिर्यस्मा[ग]च्चयत्य[घ]स्मा[ङ]दसौ च तं[१] ।
[च]तेने [छ]मौ च [ज]क्रतुः [झ]कर्म सनामानौ पृथक् पृथक्[२] ॥८१॥
य[ञ]द्दिद्यते च[ट] जातस्य[३][ठ] जातैर्यदाऽच[४]विद्यते ।
तेनेमौ तुल्यनामानावुभौ लोकौ समाप्नुतः[५] ॥ ८१ ॥
विसृजन्नयमेतेषां[६] [ड]भ्राजते योऽचि [ढ]मध्यमः ।
निपातमात्रे कल्प्यन्ते[७] तथा[८]ग्रेयानि कानिचित् ॥ ८२ ॥

---

(१) सक्षदिति घ० ।
(२) समातनौ इति घ० ।
(३) यत्नस्येति ख०, जात' सन् इति घ० ।
(४) चयेति घ० ।
(५) समनुता इति घ० ।
(६) सृजन्तिरयमेकास्तु इति घ०, विसृज्य नयमेतेषामिति ख० ।
(७) कल्पन्ते इति घ०, कथ्यन्ते इति ग० ।
(८) तस्य इति घ० ।

---

(क) ऋ० १, २४, १३ । (ख) ऋ० ८, २७, ३ । (ग) ऋ० ४, २१, ४ । (घ) १, १०१, ४ । (ङ) ऋ० १, १०५, १६ । (च) ऋ० १, २१, ६ । (छ) ऋ० २, ४०, २ । (ज) ऋ० १, १७, ५ । (झ) ऋ० १, ११, ८ । (ञ) ऋ० १, ४४, ६ । (ट) ऋ० १, ६६, ७ । (ठ) ऋ० ५, १५, २ । (ड) ऋ० १०, २०, ३ । (ढ) १, १६४, १ ।

[क]अर्चिभिः[ख] केश्ययं[1] त्वग्निर्विद्युद्विशेष[2] मध्यमः ।
असौ तु[ग] रश्मिभिः[3] केशी तेनैनामाह[4] केशिनः[घ] ॥ ८३ ॥
एतेषां तु पृथक्त्वेन त्रयाणां केशिनामिह ।
संलक्ष्यन्ते प्रक्रियासु त्रयः केशिन इत्यृचि[5] ॥ ८४ ॥
न चैवैषां[6] प्रसूतिर्वा विभूतिः स्थानजन्म वा[7] ।
निर्वक्तुं शक्यमेतैर्हि कृत्स्नं व्याप्तमिदं जगत् ॥ ८५ ॥
[ङ]वैश्वानरं[8] श्रितो ह्यग्निरग्निं[9] वैश्वानरः श्रितः ।
अनयो[च]र्जातवेदाश्च तथैव[छ] जातवेदसि[10] ॥ ८६ ॥

---

(१) ऋचिभिः केश्ययं इति ख०, अर्चिभिः केश्ययमिति ङ० ।
(२) त्वेव इति ग० घ० ।
(३) कुरश्मिभिरिति ख० ।
(४) तेन नानाह इति घ० ।
(५) प्रक्रियानि ज्ञातवश्च ह्वर्वीषि च इति घ० ।
(६) नत्वेवैषा इति घ० ।
(७) विभूतिस्थानजन्म वा इति ख० ग० ।
(८) वैश्वानरे इति क० घ० ।
(९) अग्नौ इति क० घ० ।
(१०) तु तथैनौ जातवेदसौ इति क० ख० ग० ङ० ।

---

(क) ऋ० ५, ७९, ८ । (ख) ऋ० १०, १०२, ६ । (ग) ऋ० १, १९, ८ । (घ) ऋ० १, १६४, ४४ । (ङ) ऋ० ७, ५, ५, । (च) ऋ० १, ७७, ५ । (छ) ऋ० ६, १६, ४२ ।

भालोक्याच्चैकजातत्वाद्[१] व्याप्तिमत्त्वात्तु तैजसः[२] ।
तस्य तस्येह[३] देवत्वं दृश्यन्ते ते [४]पृथक्[५] स्तुताः ॥९७॥
यत्त्वाग्नेयमिति ब्रूमः[६] सूक्तभाक् तत्र[७] पार्थिवः ।
जातवेदस्यमित्युक्ते सूक्तेऽस्मिन् मध्यमः स्मृतः[८] ॥ ९८ ॥
वैश्वानरीयमिति तु यच्च ब्रूमो[९]ऽथ वा क्वचित् ।
सूर्यसूक्तस्य[१०] भाक्तच्च ज्ञेयो वैश्वानरस्तुतौ[११] ॥ ९९ ॥
सूर्यप्रसूतावग्नी तु दृष्टौ[१२] पार्थिवमध्यमौ ।
एतेषामेव लोकानां त्रयाणामध्वरेऽध्वरे ॥ १०० ॥
[क]रोहात्प्रत्यवरोहेण चिकीर्षन्नाग्निमारुतम्[१३] ।

(१) एकजन्याच्चेति क॰ घ॰ ।
(२) व्याप्तिमत्त्वाच्च तेजसः इति क॰ घ॰ ।
(३) यस्य यस्येह इति क॰ घ॰, तस्य तस्य ह इति ख॰ ङ॰ ।
(४) च इति ख॰ ग॰ ।
(५) स्तुतिषु इति घ॰ ।
(६) यच्चाग्नेयमिति ब्रूम इति ग॰, यत्त्वाग्नेयमिति घ॰ ।
(७) सूक्तं भक्त्या तु इति क॰ घ॰ ।
(८) सूक्तं भक्त्या तु मध्यमः इति घ॰ ।
(९) इत्युक्ते यद्ब्रूयामो इति क॰ घ॰ ।
(१०) सूर्यं सूक्तस्येति ग॰ ।
(११) सूर्यभक्तस्य सूर्यस्य ज्ञेयो वैश्वानरो दिवि इति क॰ घ॰ ।
(१२) दृश्यौ इति ख॰, दृश्यौ इति क॰ घ॰ ।
(१३) चिकीर्षन्नग्निमारुतमिति ग॰ ।

(क) ऋ॰ १, ५६, २ ।

ग्रस्तं[१] वैश्वानरीयेण सूक्तेन प्रतिपद्यते ॥ १०१ ॥
ततस्तु मध्यमस्थाना देवतास्तस्तु शंसति[२] ।
इन्द्रश्च[३] मरुतश्चैव स्तोचियेऽग्नि[४]मिमं पुनः ॥ १०२ ॥
तथैत[५]दुक्रमेतेषां विभूतिस्थानसम्भवम्।
यथा[६] च देवदेवस्य तत्र तत्रेह दृश्यते ॥ १०३ ॥
यद्यच पृथिवीस्थानं पार्थिवं चाग्निमिश्रितम्[७] ।
तत्सर्वमानुपूर्व्येण[८] कथ्यमानं निबोधत ॥ १०४ ॥
जातवेदाः[क] श्रितो ह्य[९]ग्नि[ख]मग्निं वैश्वानरः[ग] श्रितः[घ] ।

---

(१) ग्रास्तमिति ग० ।
(२) मध्यमे स्थानादेवतास्तनुशंससि इति ख०, देवतास्तच शंसति इति घ० ।
(३) मरुश्चेति ग० ।
(४) स्तोचियाग्निमिति घ० ।
(५) यथैतदिति ख० ग० घ० ।
(६) तथा इति ख० ग० ङ० ।
(७) वार्ग्निमिश्रितमिति क० घ०, वाग्विमिश्रितमिति ङ० ।
(८) चानुपूर्व्येणेति ग० घ० ङ० ।
(९) अपि इति घ० ।

---

(क) ऋ० ३, ७७, ५ । (ख) ऋ० १, १, १ । (ग) ऋ० १, ५९, ६ ।
(घ) ऋ० १, ७५, ३ ।

द्रविणोदा[क]स्तथेध्म[ख]श्च श्रितश्चाग्निं[१] तनूनपात्[ग] ॥ १०५ ॥
नराशंसः[घ] श्रितश्चैन[ङ] मेन[२]मेवाश्रित[३]स्त्विलः[च] ।
बर्हिर्द्वार[छ]श्च देव्यो[ज]ऽग्नि[४]मेन[५]मेव तु संश्रिताः ॥ १०६ ॥
नक्तोषा[झ] सा च दैव्यौ[६] च होतारा[ञ]वेतदाश्रयौ[७] ।
देव्य[८]स्तिस्रः श्रिताश्चैनं त्वष्टा[ट] चैवैतदाश्रयः ॥ १०७ ॥
श्रितो वनस्पति[ठ]श्चैनं[९] स्वाहाकृतय[ड] एव च ।
अश्वश्च[ढ] शकुनिश्चैव मण्डूका[ण]श्चैतदाश्रयाः[१०] ॥ १०८ ॥

---

(१) च्चमिदिति घ० ।
(२) एतमेनमिति ग०, एवमेतमिति घ० ।
(३) चाश्रिता इति ख० घ० पुस्तकान्तरञ्च ।
(४) देवोऽग्निमिति ख० ।
(५) एतमिति घ० ।
(६) दैव्यौ इति ङ० ।
(७) एवदाश्रितौ इति घ०, होतारौ च तदाश्रयौ इति पुस्तकान्तरं ।
(८) देव्या इति ग० ।
(९) एवमिति ख० ।
(१०) तदाश्रया इति ख० ।

---

(क) ऋ० १, १५, ७-६ । (ख) ऋ० ८, ४१, २ । (ग) ऋ० १, १८८, २ ।
(घ) ऋ० १, १४२, ३ । (ङ) ऋ० १, ६, २ । (च) ऋ० १, १२८, १ ।
(छ) ऋ० १, १३, ६ । (ज) ऋ० १, १४०, ७ । (झ) ऋ० १, १३, ७ ।
(ञ) ऋ० १०, ६५, १० । (ट) ऋ० १, ३२, २ । (ठ) ऋ० १, ६०, ८ ।
(ड) ऋ० ६, ५, ११ । (ढ) ऋ० १, ३६, ८ । (ण) ऋ० ७, १०३, ७ ।

[क]ग्रावाण[१]श्चैन[२]मद्वा[३][ख]श्च नराशंसस्तथा रथः[ग] ।
[घ]दुन्दुभिश्चेषुधि[ङ]श्चैव[४] हस्तघ्नो[च][५] ऽभीशवो[६] धनुः[छ] ॥ १०९ ॥
[ज]ज्या चैतदाश्रितेषुश्च[७] श्रिता ऽश्वाजनी[झ][८] च या ।
[ञ]वृषभो द्रुघण[९]श्चैत[ट][१०] मेतं पितुरुलूखलम्[११][ठ] ॥ ११० ॥
नद्यश्चैवैनमापश्च सर्वाश्चौषधयस्तथा[१२] ।
रात्र्यश्वाप्यरण्यानिः[ड][१३]श्रद्धे[ण]ला[त]पृथिवी[थ]तथा[१४] ॥ १११ ॥

---

(१) ग्रावणा इति ख०, ग्रावणा इति ग० ।
(२) एवमिति ख०, एतमिति घ० ।
(३) मद्वा इति ग० ।
(४) एनमिति ग०, एतमिति ङ०, पुस्तकान्तरञ्च ।
(५) हस्तघ्नो इति पुस्तकान्तरं ।
(६) ऽभीषव इति पाठ सुसङ्गततया भाति ।
(७) ऽश्रयेषुरिति घ० ।
(८) ऽश्वाजनी इति ख०, चाश्वाजनी इति घ० ।
(९) वृषभो द्रुघण इति ग०, वृषाद्द्रुघण इति घ० ।
(१०) एनमिति ग० ङ० पुस्तकान्तरञ्च, एवमिति घ० ।
(११) वृषभेद्रुघणश्चैलमैषैतं पितुमुलूखलमिति ख० ।
(१२) सद्वेति ख०, सर्व्वा ऽोषधयश्च ह्वेति ग० ङ० पुस्तकान्तरञ्च ।
(१३) रात्रिरथाप्यरण्यानी इति ख०, रात्र्यथाप्यरण्यानी इति ग० ङ०, आदर्शपुस्तकमात्रे ऽरण्यानीति दीर्घस्वरान्तपाठोऽस्ति ।
(१४) श्रद्धा द्यावा पृथिव्यथेति क० घ० ।

---

(क) ऋ० १, ८९, ४ । (ख) ऋ० ८, ४२, ५ । (ग) ऋ० १, ३०, १८ ।
(घ) ऋ० १, २८, ५ । (ङ) ऋ० ६, ७५, ५ । (च) ऋ० ६, ७५, १४ ।
(छ) ऋ० ६, ७५, २ । (ज) ऋ० ६, ७५, ३ । (झ) ऋ० ५, ६२, ७ ।
(ञ) ऋ० १, ३१, ५ । (ट) ऋ० १०, ९५ १८ । (ठ) ऋ० १, २८, ६ ।
(ड) ऋ० ५, ४६, ८ । (ढ) ऋ० १०, १४६, २ । (ण) ७, ३२, १४ ।
(त) ऋ० १, १३, ९ । (थ) ऋ० १, २२, १३ ।

भजते चैन(१) मेवोर्व्वी(क)(२) द्वन्द्वभूते च रोदसी(ख)(३) ।
मुषलोलूखले(ग) चैनं(४) हविर्धाने च ये स्तुते ॥११२॥
जोष्ट्री(५)चोर्जाहुती(घ) चैनं(६) शुतुद्र्या(७)(ङ) च विपाट्(च) सह ।
यौ च देवौ शुनासीरौ(छ)(८) तौ चाग्नी चैतदाश्रयौ(९) ॥११३॥
लोके वै(१०) यच्च वै प्रातः सवनं(ज) क्रियते मखे(झ) ।
वसन्त(ञ)शरदौ(ट) चर्द्धं स्तोमो(ठ)ऽनुष्टुवयो(ड) चिरत्(ढ)(११) ॥११४॥

---

(१) चैवमिति ख०, भजेते चेतमिति क० घ०, भजेते चेनमिनि ङ० ।
(२) एवार्लौ(घ) इति क० ग० घ० ।
(३) तु गेहृषा इति ख० ।
(४) एवेति क० घ० ।
(५) जोष्ट्रा इति ख० ।
(६) चोर्जाङतिश्चैनमिति ख०, एवेति क० घ० ।
(७) सतुघ्रा इति ख० ।
(८) सुनासीरौ इति ख० ।
(९) चैवाथैतदाश्रयौ इति क० घ०, चाग्नि चैतदास्तथेति ख० ।
(१०) लोकोऽयमिति क०ग० घ० ङ० ।
(११) च यस्त्रिवत् इति क० घ० ।

---

(क) ऋ० १, १४, ९ । (ख) ऋ० १, १६७, ५ । (ग) ऋ० १, २८, ६ ।
(घ) ऋ० ८, ३९, ४ । (ङ) ऋ० ३, ३३, १ । (च) ऋ० ३, ३३, १ ।
(छ) ऋ० ४, ५७, ५ । (ज) ऋ० १, १६, ५ । (झ) ऋ० १, ६, ८ ।
(ञ) ऋ० १०, ९०, ६ । (ट) ऋ० १, ७२, ३ । (ठ) ऋ० १, ८, १० ।
(ड) ऋ० १, २८, ६ । (ढ) ऋ० १, १४०, २ । (ण) ऋ० ६, ७५, ४ ।

गायत्री(क) चैकविंशश्च यच्च साम(ख)रथन्तरम्(१)(ग)।
साध्याः(घ) साम च वैराजमाप्य(ङ)श्च वसुभिः(च)(२) सह ॥११५॥
इन्द्रेण च मरुद्भिश्च सोमेन वरुणेन च।
पर्ज्जन्येनर्त्तुभिश्चैव विष्णुना चास्य संस्तवः ॥११६॥
अथैवाग्नेस्तु पूष्णा च(३) साम्राज्यं वरुणेन च।
देवता वाहनञ्चैव(४) हविषां(५) वहनं तथा॥११७॥
देवतामर्थतत्त्वज्ञो मन्त्रैः संस्तूयते(६)हविः(७)।
असन्ततस्या(८)पि सतो(९) हविरेकं(१०) निरूप्यते॥११८॥
कर्म दृष्टे च(११) यत् किञ्चिद्(१२) विषये(१३) परिवर्त्तते।

---

(१) साध्य रथन्तरमिति ख०।
(२) आप्यश्चवसुभिरिति ख०, आप्याश्च वसुभिरिति ग० घ० ङ०।
(३) पुषश्चेति ख०, पुसा चेति ङ० पुस्तकान्तरञ्च॥
(४) वपि इति क० घ०।
(५) हविष इति क० घ०।
(६) संयोजयेदिति क० घ०।
(७) विदुरिति ख०।
(८) असंस्कृतस्येति क० घ०।
(९) विततः इति घ०।
(१०) एषा इति ख०, एवमिति ग०।
(११) तु इति क० घ०, कर्म्म दृष्टेष्विति ङ० पुस्तकान्तरञ्च।
(१२) य कश्चिदिति क० घ०।
(१३) विकथे इति ख०, विषये इति ङ०।

---

(क) ऋ० १०, १४, १६। (ख) ऋ० १,६२,२। (ग) ऋ० १०,१८,१।
(घ) ऋ० १, १६४,५०। (ङ) ऋ० १, १०५, ९। (च) ऋ० १, ५८, ३।

इत्युक्तोऽयं गणः सर्वः पृथिव्यग्न्याश्रयो महान् ॥११८॥
यस्येन्द्रो[१] मध्यमस्थानो गणः सोऽयमतः परः ।
विमानानि च दिव्यानि गन्धर्व्वाप्सरसां[२]तथा ॥१२०॥
इन्द्राश्रयस्तु[३] पर्ज्जन्यो रुद्रो वायुर्बृहस्पतिः ।
वरुणः कश्च मृत्युश्च देवश्च ब्रह्मणस्पतिः[क] ॥१२१॥
मन्यु[४]श्च विश्वकर्मा च मित्रः क्षेत्रपति[५]र्यमः ।
तार्क्ष्यो वास्तोष्पतिश्चैव सरस्वांश्चैवमत्र तु[६] ॥१२२॥
अपानपाद्धिका[ख]श्च[७] सुपर्णो[ग]ऽथ पुरूरवाः[घ] ।
ऋतो[ङ]ऽसुनीति[च]र्वेन[छ]श्च[८] तथेन्दुश्च स्त्रियो दितिः[ज][९] ॥१२३॥

(१) लेन्द्र इति क० घ० ।
(२) गन्धर्व्वाप्सरस इति क० घ०, गयाधाप्सरसामिति ग० ङ० पुस्तकान्तरञ्च ।
(३) इन्द्राश्च यस्तु इति क० घ० ।
(४) मनुरिति ख० ङ० ।
(५) मित्रश्चैत्रपतिरिति ख० ग० ।
(६) तत्र तु इति क० घ० ।
(७) अपान्नपाद्धिका चेति क० घ० ङ०, अपान्नपादधिकाश्चेति ग० ।
(८) वैनश्चेति घ० ।
(९) तस्यैतस्याश्रये दिति इति क० घ०, तथदुश्च स्त्रियो दितिरिति ङ० पुस्तकान्तरञ्च।

(क) ऋ० २, २४, २ । (ख) ऋ० ४, ३८, ६ । (ग) ऋ० १,३५,७ ।
(घ) ऋ० १, ३१, ४ । (ङ) ऋ० ८, ६०, ५ । (च) ऋ० १०, १२,४ ।
(छ) ऋ० १, ८३, ५ । (ज) ऋ० ७, १५, १२ ।

त्वष्टा[क] च सविता चैव वातो[ख][१]वाचस्पतिस्तथा ।
धाता प्रजापतिश्चैव अथर्वाण[ग]श्च[२] ये स्मृताः ॥१२४॥
भृगव[घ]श्चैवमग्निश्च[३] तथेला[ङ] चैव याः स्मृताः ।
विधातेन्दुरहिर्बुध्न्यः [च]सोमोऽहिरथ चन्द्रमाः ॥१२५॥
विश्वानर[छ]श्च वै[४]देव स्वभूणां[ज] संस्तुतो[५] गणः ॥१२६॥
मरुतोऽङ्गिरसश्चैव पितरश्चर्तुभिः सह ।
राका[झ][६]वाक्[ञ]सरमा[ट]प्या[ठ]श्च[७]भृगवो[ड]ऽप्या सरस्वती॥१२७॥
यम्यु[८]र्वंशी[ढ]सिनीवाली[ण] पथ्या[त] स्वस्ति[थ]स्तथा: कुहः ।

---

(१) वाचः इति क॰ घ॰ ।
(२) वाचर्व्वाणश्चेति ख॰ ।
(३) श्येनश्चैवैवमापश्चेति ख॰ घ॰ ।
(४) चैवेति ख॰ पुस्तकान्तरञ्च ।
(५) सद्राणा चाश्रितः इति क॰ घ॰ ।
(६) एका इति क॰ ।
(७) वाक्सरमाद्यश्चेति ङ॰ ।
(८) यभ्युरिति ख॰ ।

---

(क) ऋ॰ १, ३२,२ । (ख) ऋ॰ १, २८, ६ । (ग) ऋ॰ ६, ११, २ ।
(घ) ऋ॰ १, ५८, ६ । (ङ) ऋ॰ १, १३, ६ । (च) ऋ॰ १, १८६, ५ ।
(छ) ऋ॰ १, १८६, १ । (ज) ऋ॰ ४, ३५, २ । (झ) ऋ॰ २, ३२, ८ ।
(ञ) ऋ॰ १, १६४, ४५ । (ट) ऋ॰ १, ६२, ३ । (ठ) ऋ॰ १,१०५,६ ।
(ड) ऋ॰ १, ५८, ६ । (ढ) ऋ॰ १, १०१, ४ । (ण) ऋ॰ २, ३२, ८ ।
(त) ऋ॰ ३, ५४, ५ । (थ) ऋ॰ ३, ८६, ६ ।

पृथिव्यनुमतिर्धेनुः सीते[क]ला[ख]ख्या तथैव[१] गौः ।
गौरी[ग] च रोदसी[घ] चैव इन्द्राण्या[२]श्चैष वै पतिः ॥१२८॥
छन्दस्त्रिष्टुप् च पङ्क्ति[ङ]श्च लोकानां मध्यमश्च यः ।
एतेष्वेवाश्रयो[३]विद्यात्स्तवनं[च] मध्यमस्य यत् ॥१२९॥
ऋतू च ग्रीष्महेमन्तौ यच्च सामोच्यते[४] बृहत् ।
शक्वरीषु[छ] च यद्गीतं नाम्ना तत्साम शाक्वरम् ॥१३०॥

इति बृहद्देवतायां प्रथमोऽध्यायः ।



(१) श्रीर्लाक्षिला दितिस्त्वेति क० घ०, सीतालाक्षा तथैवेति ख० ग० ।
(२) चैवैन्द्रायण्या इति ख० ।
(३) एकस्यैवाश्रयः इति क० घ०, श्चाश्रये इति ख० पुस्तकान्तरञ्च ।
(४) साभ्योच्यते इति ख० ।

(क) ऋ० ४, ५७, ७ । (ख) ऋ० १, १२८, ७ । (ग) ऋ० ९,१२,३ । (घ) ऋ० १, १६७,५ । (ङ) ऋ० १०, ११७, ८ । (च) ऋ० १, १६, ५ । (छ) ऋ० ७, ३३, ४ ।

# अथ द्वितीयोऽध्यायः।



आह चास्यैव तौ(१)स्तोमा(क)वाग्नयौ शाकटायनः(२) ।
यस्य(३) पञ्चदशो नाम्ना सङ्ख्याया(४) त्रिणवस्य(५) यः ॥१॥
संस्तुत(६)स्यैव पूष्णा च विष्णुना वरुणेन च।
सोमवाय्वग्निकुत्सैश्च ब्रह्मणस्पतिनैव च ॥२॥
बृहस्पतिना च तथा(७) बृहत(ख)स्यैष वै पतिः(८) ।
कासुचित्(९) केचिदित्याऊर्निपाताः(ग) स्तुतिषु स्तुताः(१०) ॥३॥

---

(१) द्वौ इति ख० ग० ङ०।
(२) शाकटायन' इति क० घ०।
(३) यस्येति ख०।
(४) सङ्ख्यायामिति क० घ०।
(५) त्रिनव' इति दन्त्यनकारयुक्तपाठो विशुद्ध'।
(६) संस्कृतः इति क० घ०।
(७) स बृहस्पतिना चैव इति ख०, बृहतस्पतिना चैवेति ग० ङ०।
(८) नाम्ना यस्यापि पर्व्वतः(घ) इति ख० ग० ङ० पुस्तकान्तरस्य।
(९) कश्चित्स इति क० घ०।
(१०) निपाताः स्तुतिषु स्तुता' इति क० घ०।

---

(क) ऋ० १, ८, १०। (ख) ऋ० १, १३०, ९। (ग) ऋ० ४,५५,३। (घ) ऋ० १, ३७, ७।

मित्र[क]श्च[१] स्तूयते[२]देवो वरुणेन महा:[३][ख]महत् ।
रुद्रेण सोमः पूष्णा[४] च पुनः पूषा च वायुना ॥४॥
वातेनैव तु[५] पर्जन्यो स्तूयते वै क्वचित्[६] क्वचित् ।
ऋच[ग]र्द्धर्चेषु[७] पादेषु सूक्तेष्वेषु तु[८] कृत्स्नशः ॥५॥
रसादानं[९] तु कर्म्मास्य वृत्रस्य[१०][घ] च निबर्हणं ।
स्तुतेः प्रभुत्वं सर्वस्य बलस्य[ङ] निखिला कृतिः ॥६॥
इत्यैन्द्रो मध्यमस्थानो गणः सम्यगुदाहृतः ।
यः परस्तु[११]गणः सौर्य्यो द्युस्थानस्तं निबोधत ॥७॥

---

(१) तु इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(२) भूयते इति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(३) सर्व्वेषु आदर्शपुस्तकेषु, महा इति निर्व्विसर्गपाठो वर्त्तते ।
(४) पूषा इति ख॰ ।
(५) चैव इति ख॰ ङ॰ । चेति ग॰ ।
(६) अन्यत्र वै इति ग॰ ङ॰ पुस्तकान्तरञ्च ।
(७) अर्धर्च्चस्व्तु इति क॰ घ॰, ऋचत्वर्द्धेषु इति ख॰, ऋक्त्वर्द्धर्चेषु इति ग॰ ।
(८) सूक्तेष्वेव त्विति क॰ घ॰, सूक्तेष्वेतेषु इति पुस्तकान्तरं ।
(९) रसदानमिति क॰ घ॰ ।
(१०) पुत्रस्येति क॰ घ॰ ।
(११) यस्य यस्तु इति क॰ ।

---

(क) ऋ॰ १, २३, ६ । (ख) ऋ॰ ८, २०, २० । (ग) ऋ॰ ५,५६,३ ।
(घ) ऋ॰ १, ३२, १० । (ङ) ऋ॰ १, ३७, १२ ।

तस्य मुख्यतमौ देवावश्विनौ[1]सूर्य्यमाश्रितौ ।
वृषाकपायि[2][क] सूर्य्या[ख]षाः[ग] सूर्य्यस्यैव तु पत्नयः[3] ॥८॥
अमुतोर्वाङ्[4]निवर्त्तन्ते प्रतिलोमास्तदाश्रयाः[5] ।
पुरोदया[6]त्तामुषसं सूर्य्यां मध्यन्दिने स्थिते ॥९॥
वृषाकपायिं[1] सूर्य्यास्तकाल आहुः[7] स्तुतिष्वपि[8] ।
तस्या[9]श्चये[10]मरण्यूस्व[घ][11] भगः[ङ] पूषा वृषाकपिः[च][12] ॥१०॥

---

(१) त्वश्विनौ इति क० घ० ।

(२) सर्व्वेषु आदर्शपुस्तकेषु वृषाकपायी इति दीर्घस्वरान्तपाठो वर्त्तते ।

(३) पत्नय इति क०, यत्नतः इति ख० ।

(४) अमुतोर्वागिति ङ० पुस्तकान्तरञ्च । अमुतो वागितिपाठः शुद्धः ।

(५) पत्नोदये इति क० घ० ।

(६) पुरोदये इति क० घ० ।

(७) सूर्य्यस्य तामेवाहुरिति क० घ०, सूर्य्यस्य स्तानेवाहुरिति ख० ।

(८) तु निम्नुचि इति क०, निमुचि इति ख० ।

(९) अस्येति क० घ० ।

(१०) आश्रमे इति ग० ।

(११) तत्तापुस्येति ख० ।

(१२) बृहस्पतिरिति ख० ।

---

(क) ऋ० १०, ८६, १३ । (ख) ऋ० ५, ७३, ५ । (ग) ऋ० १, ४६, १ ।
(घ) ऋ० १०, १७, २ । (ङ) ऋ० १, २४, ४ । (च) ऋ० १०, ८६, १ ।

यमो वैश्वानरो[क] विष्णुर्वरुणश्चैकपादजः[१] ।
पृथिवी च समुद्राश्च देवाः सप्तर्षयश्च ये ॥११॥
आदित्याः केशिसाध्याश्च सविता[२] वसुभिर्मनुः ।
दध्यङ्[ख]ङ्ङथर्वा[ग] विश्वे[घ] च वाजिनो[ङ][३]देवपत्नयः ॥१२॥
असौ तृतीयं सवनं[४] लोकः साम च[५] रैवतं ।
वैरूपश्चैव वर्षाश्च[६] शिशिरोऽथ ऋतुस्तथा[७] ॥१३॥
त्रयस्त्रिंशश्च[८]यः स्तोमः[च][९] सृष्टा सप्तदशश्च यः ।
छन्दश्च जगतीनाम्ना[१०] तथाऽतिच्छन्दसश्च[११]याः[१२] ॥१४॥

---

(१) अथ पादजः इति क॰ घ॰ ।
(२) आदित्यपूग साध्याश्च साङ्गश्चेति क॰ घ॰ ।
(३) वाजिनौ इति ख॰ ।
(४) तृतीयसवनमिति क॰ घ॰ ।
(५) तृतीय' सर्व्वेन लोमसामा चेति ख॰ ।
(६) वैरूप्यश्चैव मर्षाश्चेति ख॰ ।
(७) शिशिरश्चैव यावत्तु इति क॰ घ॰ ।
(८) त्रयस्त्रिंशश्चेति ख॰ ।
(९) यत् स्तोमं इति क॰घ॰ ।
(१०) चैवेति क॰ घ॰ ।
(११) अतिश्छन्दसाश्चेति ग॰, अतिच्छन्दसाश्चेति क॰ ख॰ घ॰ ।
(१२) यदिति क॰ घ॰ ।

---

(क) ऋ॰ १, ५९, ६ । (ख) ऋ॰ १, ८०, १६ । (ग) ऋ॰ १, ८०, १६ ।
(घ) ऋ॰ १, ३, ७-९ । (ङ) ऋ॰ १, ११, २ । (च) ऋ॰ १, ८, १० ।

पौरुषश्चाऊरश्चैतत्सर्वमेव तु(१) पौरुषं।
एतस्यैव तु विज्ञेया देवाः संस्तविका(२)स्त्रयः(३) ॥१५॥
चन्द्रमाश्चैव वायुश्च पञ्चमं वत्सरं(४) विदुः।
केचित्तु निर्वपत्य(५)स्य सौर्य्यं वैश्वानरं हविः ॥१६॥
सौर्य्यवैश्वानरीयं हि तत् सूक्तमिव(६)दृश्यते।
ऋगर्द्धर्चोऽथ(७)वा पादो दृचो वा यदि वा त्वचः ॥१७॥
अनेन तु प्रवादेन(८) दृष्टा मूर्द्धन्वतास्तुतिः।
सूर्य्यवैश्वानराग्नीना(९) मैकात्म्यमिह दृश्यते ॥१८॥
हरणं तु रसस्यैतत्कर्मणाऽमुत्र(१०)रश्मिभिः।
यानीमानि च पश्यन्ति सर्वभूतानि तेजसा(११) ॥१९॥

---

(१) हेति ख०।
(२) संस्तापिकाः इति क० घ०।
(३) तये इति ख०।
(४) यच संवत्सरमिति क० घ०, पञ्चसंवत्सरमिति ख०।
(५) निर्व्वपते चेति क० घ०।
(६) न सूक्तमिहेति क० घ०।
(७) ऋगर्द्धर्चश्चेति क० घ०, ऋगवर्द्धर्चाचेति ख०।
(८) प्रयोगेणेति क० घ०, प्रपादेनेति ख०।
(९) सौर्य्यवैश्वानराग्नीनामिति क० ख० घ० पुस्तकान्तरञ्च।
(१०) रश्मिभिश्चास्य कर्म्माऽमुत्र चेति ग० ङ० पुस्तकान्तरञ्च।
(११) येन नातिविजानन्ति सूर्य्यभूतानि चक्षुषेति ख० ग० ङ० पुस्तकान्तरञ्च।

विभागमिममेतेषां विभूतिस्थानसम्भवं ।
सम्यग्विज्ञाय[१]मन्त्रेषु तन्त्[२]कर्मसु योजयेत् ॥२०॥
अध्यापयन्नधीयानो मन्त्र[३]श्चैवानुकीर्तयन् ।
स्थानं सालोक्यं सायुज्यमेतेषामधिगच्छति[४] ॥२१॥
अग्नेस्तु यानि सूक्तानि[५] पञ्च नामानि कारवः[क] ।
षड्विंशतिस्तथेन्द्रस्य प्राहुः सूर्यस्य सप्त च ॥२२॥
तेषां पृथङ्निर्वचनमेकैकस्येह कर्मजं ।
उच्यमानं यथान्यायं शृणुध्वमखिलं मया ॥२३॥
जातो यदग्रे भूतानामग्रणीरध्वरे च यत् ।
नाम्ना सन्नयते वाङ्गं[६] स्तुतोऽग्निरिति[७]सूरिभिः[ख] ॥२४॥
द्रविणं[ग] धनं बलं वापि प्रायच्छद्येन[८] कर्मणा ।

---

(१) विज्ञानमिति क॰ घ॰ ।
(२) तांश्चेति क॰ घ॰ ।
(३) सत्य इति क॰ घ॰ ।
(४) एव गच्छतीति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(५) सूक्तेषु इति क॰ घ॰ ।
(६) सन्तिष्ठते चाग्ने इति क॰ घ॰ ।
(७) इत्येति क॰ घ॰ ।
(८) चैव प्रयच्छेद्येनेति क॰ घ॰ ।

---

(क) ऋट॰ १, ११, ६ । (ख) ऋट॰ १,५१,१५ । (ग) ऋट॰ १,९४,१४ ।

तत्कर्म दृष्ट्वा[1]कुत्स[क]स्तु प्राहैनं द्रविणोदसं[ख] ॥२५॥
अयं तनूनपाद्[ग]ग्निरसौ हि तननात्तनुः[2][घ] ।
ततस्तु मध्यमो यज्ञे स्थानेऽयं[3] मध्यमात्तत.[4] ॥२६॥
अनन्तरं[5] प्रजामाङ्गर्नपा[ङ]दिति रूपणवः।
नपादमुष्य[6]चैवायमग्निस्तेन तनूनपात् ॥२७॥
पृथक्त्वेन समत्वेन[7] यज्ञे यच्छास्यते[8] नृभिः ।
स्तुवन्त्यामीषु तेनेमं नराशंस[च]न्तु कारवः[9][छ] ॥२८॥
पुनाति[10] यदिदं विश्वमेवाग्निः[11] पार्थिवोऽथ च[12] ।

---

(१) छत्वेति क० घ० ।
(२) तपसा तनूरिति क० घ० ।
(३) स्थानोऽयमिति ख० ।
(४) जज्ञे यस्यैव मध्यमादिति क० घ० ।
(५) अनन्तरानिति ङ० पुस्तकान्तरञ्च।
(६) अमुष्येति ख० ।
(७) समासैस्त्विति ख० ग० ङ० पुस्तकान्तरञ्च ।
(८) वास्यते इति क० ख० ।
(९) सूरयः इति क० घ० ।
(१०) जानाति इति ख० ।
(११) विश्वमेवाग्निरिति ख० ।
(१२) पार्थिवोऽप्यचेति ख०।

---

(क) ऋ० १, १०६, ६ । (ख) ऋ० ६, ८८, ३ । (ग) १, १८८, २ । (घ) ऋ० १, १२०, ११ । (ङ) ऋ० १, १४२, १ । (च) ऋ० १, १३, ३ । (छ) ऋ० १, ११, ६ ।

वैखानसर्षिभि[१] स्तेन पवमान[क] इति स्तुतः[२] ॥२९॥
भूतानि वेदयज्जातो जातवेदाऽथ[ख]कथ्यते[३]।
यद्वैष[४]जातविद्यो[५]ऽभूदित्था[६]जातोऽधिवेत्ति[७] वा ॥३०॥
विद्यते सर्वभूतैर्हि[८] यद्वा जात.[९] पुनः पुनः।
तेनैष मध्यभागिन्द्रो[ग][१०] जातवेदा इति स्तुत ॥३१॥
पुनाति यदिदं विश्वं ह्येषोऽग्निः[घ] पार्थिवोऽप्सु सन्।
वैखानसाश्रितैस्तस्मात्पवमान इति स्तुत.[११] ॥३२॥

---

(१) वैखानस ऋषिरिति ख०।
(२) पुनातीत्यादि पवमान इति स्तुत इत्यन्तपाठ क० घ० पुस्तकयो र्नास्ति।
(३) जातवेदाऽथ विद्यते इति क० घ०।
(४) यद्वैष इति क० घ०।
(५) जात वेद इति क० घ० पुस्तकान्तरद्वये।
(६) वित्तमिति ख० ग० ङ०।
(७) अथ वेत्तीति क० घ०।
(८) सर्व्वमेतर्द्धीति क० घ०।
(९) जातामिति क० घ०।
(१०) मध्यभागीन्द्र इति ख० ग०।
(११) एष श्लोक ख० ग० ङ० पुस्तकेषु पुस्तकान्तरे च न विद्यते।

---

(क) ऋ० ८, १०१, १४। (ख) ऋ० १, ७७, ५। (ग) ऋ० १, २, ५।
(घ) ऋ० १, १, २।

अणिष्ठ एष[१] यन्तु चीन्[२]व्याप्यैको व्योम्नि तिष्ठति ।
तेनैनमृषयोऽर्चन्त.[३] कर्मणा वायु[क]मब्रुवन् ॥ ३ ३॥
चीर्णीमान्यावृणोत्येको[४]मूर्त्तेन तु रसेन यत् ।
तयैनं वरुणं[ख] प्राह्मा स्तुतिभ्याऊः क्षपण्वः[५] ॥ ३ ४॥
अरोदीद्[६]न्तरिक्षे यद्विद्युद्वृष्टिं ददन्नृणां[७] ।
चतुर्भिर्ऋषिभिस्तेन रुद्र[ग] इत्यभिसंस्तुतः[८] ॥ ३ ५॥
चतुर्विधानां भूतानां प्राणो भूत्वा व्यवस्थितः ।
इष्टे चैवास्य सर्व्वस्य तेनेन्द्र इति स स्मृतः[९] । ३ ६॥
इरां[घ] दृणाति[१०] यत्काले मरुद्भिः सहितोऽम्बरे ।

---

(१) अनिष्ठयैवेति क० घ० ।
(२) यस्तन्वा इति क०, यन्तु चीनिति ख० ङ०, यस्तन्वा इति घ० ।
(३) अर्चन्ते इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(४) चीनिमानावृणोत्येकानिति क० घ० ।
(५) तु कारव. इति क० घ० ।
(६) रोरूयन्निति क० घ० ।
(७) विद्युदृष्टिरदान्नृणामिति क० घ० ।
(८) अभिधीयते इति क० घ० ।
(९) एष श्लोक. क० घ० पुस्तकयोर्नास्ति ।
(१०) इरा ददातीति क० घ० ।

---

(क) ऋ० ५, ४१, ६ । (ख) ऋ० १, ८, ७ । (ग) ऋ० १, ४३, ३ ।
(घ) ऋ० ५, ८३, ४ ।

रवेण महता युक्तस्तेनेन्द्रम्वृषयोऽब्रुवन् ॥३७॥
यदिमां प्राजयत्येको[1] रवेनाम्बरजेन गां ।
कालेऽचिरैर्वर्षस्पर्शौ[2]तेन पर्जन्य(क)माहतुः ॥३८॥
तर्पयत्येव यल्लोकान् जन्यो जनहितश्च यत् ।
परो[3]जेता जनयिता यद्वाग्नेयस्ततो[4]जगौ[5] ॥३९॥
बृहन्तौ पाति यल्लोकावेष द्वौ मध्यमोत्तमौ ।
बृहता[6]कर्मणा तेन[7] बृहस्पति(ख) रितीडित[8] ॥४०॥
ब्रह्म वाक् ब्रह्म सत्यञ्च ब्रह्म सर्व्वमिदं जगत् ।
पातार ब्रह्मणस्तेन शौनहोत्र स्तुवन् जगौ ॥४१॥
चर्पा(ग)[9] चितिभ्यो विदधद्दतुम्वविशत् चितौ[10] ।

---

(१) प्राजयतीति क० घ० ।
(२) धार्षौ इति क० घ० ।
(३) पुर इति ख० ।
(४) चाग्नेयस्तत इति ख० ग० ।
(५) एष श्लोक क० घ० पुस्तकयोर्न दृश्यते ।
(६) बृहन्तीति ख० ।
(७) चैवेति क० घ० ।
(८) बृहतश्चैव वै पतिरिति क० घ० ।
(९) चन्तमिति ग० ।
(१०) ब्रह्मवागित्यादि चविशत् चितौ इत्यन्तपाठ क० घ० पुस्तकयोर्न दृश्यते ।

---

(क) ऋ० ५, ५३, ६ । (ख) ऋ० १, ६२, १ । (ग) ऋ० ६, ४९, ४ ।

ददाति यदि मह्यं वै कृतावम्बरज पुन[१] ।
तेनैनमाह चैत्रस्य वामदेव[(क)][(२)]स्तुवन् पति ॥४२॥
मनसेमन्तु य दृश्य[(३)] मध्यम लोकमाश्रित ।
प्रमत्[(ख)] सत्येन सत्ये[(ग)] वै स[(४)] एष स्तुतवानृत[(५)][(घ)] ॥४३॥
रवेणान्तरसे चित्रे[(६)]स्थितो व्योमन्देव मायया ।
एतस्य श्लोक[(ङ)] इत्येष पुनस्तेन ततोऽब्रवीत् ॥४४॥
वास्तु[(च)] प्रयच्छल्लोकस्य मध्यमस्य तु पाति यत्[(७)] ।
तेन वास्तोष्पति माह चतुर्भिरिममीर्वंश ॥४५॥
वाचा वेदा ह्यधीयन्ते वाचा च्छन्दांसि तच ह ।
अथो[(छ)] वाक् सर्व्वमेवेद तेन वाचस्पति स्तुत[(८)] ॥४६॥

---

(१) एतच्छ्लोकार्द्ध ग॰ ङ॰ पुस्तकयोर्न विद्यते ।
(२) पाकादेवेति क॰ घ॰ ।
(३) मनसेममिम दृश्यमिति क॰ घ॰, मनसेय वृमादृश्यमिति ख॰, मनसेमन्तु यद्दृश्यमिति ग॰ ।
(४) य इति ङ॰ पुस्तकान्तरस्थ ।
(५) ऋषिरिति क॰ घ॰ ।
(६) रस स्थितौ रवेयत्तौ इति क॰ घ॰ ।
(७) पालित इति क॰ घ॰ ।
(८) वाचा वेदा ह्यधीयन्ते इत्यादि तेन वाचस्पति स्तुत इत्यन्त क॰ घ॰, पुस्तकयोर्न विद्यते ।

---

(क) ऋ॰ ४, २६, १८ । (ख) ऋ॰ ६, २३, ५ । (ग) ऋ॰ ८, १०८, ६ ।
(घ) ऋ॰ १, ४१, ४ । (ङ) ऋ॰ १, १६०, ४ । (च) ऋ॰ ८, १५, ५ ।
(छ) ऋ॰ १, २८, ६ ।

न कुत[१]श्चैव[२] यद्दीनो वृत्वा[क] तिष्ठति मध्यमः।
राहूगण ऋषिस्तेन प्राहैनं गौतमो[३] दिति[ख] ॥४७॥
प्रजाभ्यस्त्वेष यच्छक्र एष वीरः शिवः सुखः[४]।
हिरण्यगर्भ[ग] स्तेनैनमृषिरर्चतु[५]वाचकम् ॥४८॥
इह प्रजाः प्रयच्छेति[६] सङ्गृहीता[७] प्रयाति[८] च।
ऋषिर्विवस्वतः पुत्रं तेनाहैनं पुन[९] र्यमं[घ] ॥४९॥
मित्रीकृत्य जना विश्वे यदिमं[१०] पर्य्युपासते।
मित्र[ङ] इत्याह तेनैनं विश्वामित्रः[च] स्तुवन् स्वयम् ॥५०॥
निदाघमासातिगमे यद्दृते नावति चितिम्[११]।

---

(१) नकुन इति ख॰, न ऊतः इति ङ॰।
(२) एष इति क॰ घ॰।
(३) गोतम इति क॰ घ॰।
(४) प्रजाभ्यस्त्वेष यच्छर्म्मकमिच्छन्मनसा सखम् इति ख॰ ग॰।
(५) एव लिति ख॰, इच्छनु इति ग॰ ङ॰ पुस्तकान्तरञ्च।
(६) प्रयच्छन् स इति ख॰ ग॰, नियच्छन्निरिति क॰ घ॰।
(७) सङ्गृहीत्वेति ग॰ ङ॰, पुस्तकान्तरञ्च।
(८) सङ्गृहीताह याति इति घ॰।
(९) यमः इति क॰ घ॰।
(१०) मैत्रं कृत्वैजना विश्वे यदेते इति क॰ घ॰, यदिमे इति ख॰।
(११) यदि सेनावत्रीदितमिति क॰ घ॰, यदतेना च निच्छति इति ख॰।

---

(क) ऋ॰ १०, ९०, १। (ख) ऋ॰ ४, २, ११। (ग) ऋ॰ १०, १२१, १।
(घ) ऋ॰ १, ७३, १०। (ङ) ऋ॰ १, २३, ६। (च) ऋ॰ ३, ५२, ६।

विश्वस्य जनयन् कर्म विश्वकर्मै[क]व तेन सः[१] ॥५१॥
सरांसि घृतवन्त्यस्य सन्ति लोकेषु यत्त्रिषु ।
सरस्वन्त[ख]मिति प्राह वाचं प्राज्ञः सरस्वतीम्[ग][२] ॥५२॥
प्राणभूतस्तु भूतेषु यद्वितत्येह[३] तिष्ठति ।
तेनैनं वेन[घ]माहर्षिर्वेनो[ङ]नामेह[४] भार्गवः ॥५३॥
सहजे मासि मास्येनमभिमत्य[५]ततो मजन्[६] ।
तेनैनं मन्यु[च]रित्याह मन्युरेव तु तापसः ॥५४॥
यदन्तकाले भूतानामेक[७] एव नयत्यसून् ।
तेनासुनीति[छ]रुक्तोऽयं स्तुवता श्रुतबन्धुना ॥५५॥
निदाघमासातिगमे जन्म मध्ये भवत्यपां[८] ।
नप्तार[ज]माह तेनैनमृषिर्गृत्समदः[झ]स्तुवन्[९] ॥५६॥

---

(१) त्विति क० घ० ।
(२) इतीमन्तु ब्रूतो दीर्घतमौर्वशौ इति क० घ० ।
(३) यद्वेनत्येष्विति ग०, यद्वेनलेन्द्विति ङ० पुस्तकान्तरञ्च ।
(४) व्याहार्चन् वेनोऽन्यमेहेति क० घ० ।
(५) अभिवत्येति ख०, अभिमत्येति ग० ।
(६) मासि मासोमामभितप्य तपोऽग्रजः इति क० घ० ।
(७) एष इति क० घ० ।
(८) मध्येऽस्य यत्त्वपामिति क० घ० ।
(९) त्वपामिति क० घ० ।

---

(क) ऋ० ८, ९८, २ । (ख) ऋ० १, १६४, ५२ । (ग) ऋ० ६, ६१, २ ।
(घ) ऋ० ९, २१, ५ । (ङ) ऋ० १, ८३, ५ । (च) ऋ० २, २४, १४ ।
(छ) ऋ० १०, १२, ४ । (ज) ऋ० २, ३५, १४ । (झ) ऋ० २, १९, ८ ।

अपा[१]मम्बरगर्भां यमादधत्[२]सोऽष्टमासिकम् ।
यत्क्रन्दत्य[३] सक्षमध्ये दधिक्रेति तदोच्यते[४] ॥ ५७ ॥
मासेन सम्भृतं गर्भं नवमेनाथ मासिकम्[५] ।
स्वयं क्रन्दन् दधात्युर्व्वीं धातेत्यृग्भिः स[६] गीयते ॥ ५८ ॥
स्तीर्णेऽन्तरिक्षे क्षिपति यदा तूर्णं चरत्यसौ[७] ।
अरिष्टनेमिस्तार्क्ष्य[क]र्षिस्तार्क्ष्यं तेनैन[८]मुक्तवान् ॥ ५९ ॥
रुवन्[ख] व्योम्नुदयं याति क्रन्दन् भा[९]द्विस्रजन्नपः ।
पुरूरवस[ग]माहैनं स्ववाक्येनोरु[घ]वासिनी[१०] ॥ ६० ॥

---

(१) वक्ष्यामिति क॰ घ॰ ।
(२) आहरदिति क॰ घ॰ ।
(३) यत्क्रन्दते इति क॰ घ॰ ।
(४) दधिक्रास्तेन कथ्यते इति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(५) अष्टमासिकमिति क॰ घ॰ ।
(६) तु इति क॰ घ॰ ।
(७) तूर्णं क्षिपं वज्रसखा यद्विपातीह धन्विनीति क॰ घ॰, तूर्णं क्षिप्रत्वञ्चसखो यद्वियति पन्वतीति ख॰, करोत्यसौ इति ङ॰ पुस्तकान्तरेषु ।
(८) एवमिति ख॰ ग॰ ङ॰ पुस्तकान्तरेषु ।
(९) क्रन्तभादिति ग॰ ।
(१०) स्ववाक्यैरुरुवाग्निनीति क॰ घ॰ ।

---

(क) ऋ॰ १, ८९, ६ । (ख) ऋ॰ १, १७३, ९ । (ग) ऋ॰ १, ३१, ४ ।
(घ) ऋ॰ ११, १३, ७ ।

यत्तु प्राच्या वयं नेति[१] घोषेण महता वृतः[२] ।
क्षेमं क्षितिभ्यो विदधदयर्त्तुंप्रविशत् क्षितौ[३] ॥ ६१ ॥
तेन मृत्युमिमं सन्तं स्तौति मृत्युरिति स्वयं[४] ।
नाम्ना सङ्कुसुको[५] नाम यमपुत्त्रो जघन्यजः[६] ॥ ६२ ॥
संवर्तयंस्तमः सूर्य्यो[७] दुपसद्य प्रवर्तयन् ।
दिवाकरः प्रसौत्येकः[८] सविता तेन कर्मणा ॥ ६३ ॥
उदितो भासयल्लोका[९] न्निमांश्चैव स्वरश्मिभिः[१०] ।
स्वयं वसिष्ठस्तेनैनमृषिराह स्तुवन् भगम्[११][क] ॥ ६४ ॥

---

(१) नैतीति क॰ घ॰ ।

(२) मृधे इति क॰, मृतः इति ख॰, मृधमिति घ॰ ।

(३) एतच्छ्लोकार्द्धं ग॰ ङ॰ पुस्तकयोर्नास्ति । क्षयंक्षितिभ्यो विरजत् यत्तु+प्रविश क्षितौ इति ख॰, क्षविवक्षितौ इति क॰ घ॰ ।

(४) इतीश्वरमिति क॰ घ॰ ।

(५) सङ्कुसुमः इति क॰ ।

(६) जघन्यसः इति ख॰, जघन्यकः इति ङ॰ ।

(७) सं वर्त्तयंस्तमो सूर्यौ इति क॰ घ॰, संवर्त्तयं तमः सूर्यादिति ख॰ ग॰ ङ॰ ।

(८) दिवा चरन् प्रसूत्यैकः इति क॰ घ॰ ।

(९) भाति यल्लोकानिति क॰ घ॰ ।

(१०) चैकश्च रश्मिभिरिति ख॰ ङ॰ पुस्तकान्तरञ्च ।

(११) स्तुवन्भगमिति ग॰ ।

---

(क) ऋ॰ १, १४, ३।

पुष्यन् चितिं[१] पोषयति प्रणुदन् रश्मिभिस्तमः[२] ।
तेनैनमस्तौत् पूषेति भरद्वाजस्तु पञ्चभिः ॥६५॥
त्रीणि भान्ति रजांस्यस्य यत्पदानि तु तेजसा[३] ।
तेन मेधातिथिः प्राह विष्णु[क]मेनं[४] त्रिविक्रमम् ॥ ६ ६ ॥
कृत्वा भायं पृथग्याति[५] भूतेभ्यस्तमसोऽत्यये ।
प्रकाशं किरणैः कुर्वंस्तेनैनं केशिनं[ख] विदुः ॥ ६ ७॥
सम्प्रत्येकैकशस्त्वेनं[६] यन्मन्यन्ते पृथङ्नराः ।
विश्वे[ग] विश्वानर[७][घ] स्तेन कर्मणा स्तुतिषु स्तुतः ॥ ६ ८ ॥
वृषे[ङ]व कपिलो[८][च] भूत्वा यन्नाकमधिरोहति ।
वृषाकपि[छ]रसौ तेन विश्वस्मादिन्द्र उत्तरः[ज]।
रश्मिभिः कम्पयन्नेति वृषा वर्षिष्ठ[झ] एव सः ॥६९॥

---

(१) उद्यन् जगदिति क० घ० ।
(२) तमः इति ख० ।
(३) तेजसः इति क० घ० ।
(४) एतमिति क० ख० घ० ग० ।
(५) सौम्यं पृथक् तेऽग्नी इति क० घ० ।
(६) मां प्रत्येकैकशस्त्वेवेति क० घ० ।
(७) वैश्वानरः (ञ) इति क० घ० ।
(८) वृषैव कपिल इति क० घ०, वृषैककपिल इति ख० ग० ।

---

(क) ऋ० ३, ५४, १४ । (ख) ऋ० १, १०, ३ । (ग) ऋ० १, ३, ७–९ ।
(घ) ऋ० १, १८६, १ । (ङ) ऋ० १, ५९, ६ । (च) ऋ० १, ७, ८ ।
(छ) ऋ० १०, २७, १६ । (ज) ऋ० १०, ८६, १ । (झ) ऋ० ४, १८, ९ ।
(ञ) ऋ० १, २७, ६ ।

सायाह्नकाले भूतानि स्वापयन्नस्तमेति यत् ।
वृषाकपि[क]रितो[१] वा स्यादिति मन्त्रेषु दृश्यते ॥७०॥
त्रिषु धन्वे[ख]ति[२] ह्यैन्द्रेण प्रत्युक्तो वारिषाकपे[३] ।
विष्णातेर्विशतेर्वा स्याद्वेवेष्टेर्व्याप्तिकर्म्मण ।
विष्णुर्निरुच्यते वात सर्व्वं सर्व्वान्तरश्च स[४] ॥ ७१ ॥
पञ्च षड्विंशतिश्चैव यानि नामानि सप्त च ।
सम्यगग्नीन्द्रसूर्य्याणा तान्युक्तानि यथाक्रमम् ॥ ७२ ॥
नैपातिकाना नाम्ना तु प्रागुक्तैर्नामलक्षणे ।
सम्पन्नाना पृथक्त्वेन परिसङ्ख्या न विद्यते ॥ ७३ ॥
पार्थिवी[ग] मध्यमा[घ] दिव्या वागपि त्रिविधा तु या ।
तस्या सूक्तानि नामानि यथास्थान निबोधत ॥ ७४ ॥
छत्वन्तु भजते सूक्तमेता[५]नद्य स्तुता[६]भुवि ।

---

(१) ध्रुतः इति पुस्तकान्तरे ।
(२) धान्वेतीति ग० त्रिषुधन्वेतीति ङ० ।
(३) वृषाकपे(ङ) इति ख० ।
(४) रश्मिभि काम्यमेतीत्यादि सर्व्वं [illegible] ग०
घ० पुस्तकयोर्नेक्ष्यते ।
(५) छायेषा इति क० घ०, [illegible] इति [illegible] ।
(६) तदेति क० घ० ।

---

(क) ऋ० १०, ८६, १६ । (ख) ऋ० [illegible] (ग) ऋ० [illegible]
२५, ६ । (घ) ऋ० ६, २१, १ । (ङ) [illegible]

यं वै वैनं[१] भजन्त्यापो[२] यदा[३] चौषधयः सदा[४] ॥ ७५ ॥
अरण्यानी[क] च रात्री[ख] च श्रद्धा[ग] चोषाः[५][घ] सरस्वती ।
पृथिवी चैव नामैषा भूत्वा[ङ]द्या च भजन्ति च[६] ॥ ७६ ॥
अग्नायी[च]नामतोऽप्येषा[७] भूत्वाग्नेयेषु[८] केषुचित् ।
स्तुता निपात[छ]मात्रेण तत्र तत्रेह दृश्यते ॥ ७७ ॥
मध्ये सत्यदिति[ज]र्वाक् च[९] भूत्वा चैषा सरस्वती ।
समग्रं भजते सूक्तं त्रिभिरेव तु नामभिः ॥ ७८ ॥
एषैव दुर्गं भूत्वर्चं[झ] हत्वा[१०] स्यात् सूक्तभागिनी[११] ।

---

(१) यदा चैनमिति क० ख० घ०, यस्य वैनमिति ग० ।
(२) भवन्त्याप इति ख० ।
(३) तदेति क० घ० ।
(४) तथेति क० घ० ।
(५) चैषेति क० ख० घ० ।
(६) भूत्वा या भजते स्तुचीति क०, व्याभजते स्तुचीति घ० ।
(७) अग्नायीला च नामैषेति क० घ० ।
(८) भूत्वाग्नेयीष्विति क० घ० ।
(९) वाक्यमिति क० घ०, मध्यसत्यदितिर्वाक्चेति ख० ।
(१०) हत्येति ङ० पुस्तकान्तरस्य ।
(११) एषैव दुर्गा भूत्वर्चमिति श्लोकार्द्धं क० घ० पुस्तकयोर्न विद्यते।

---

(क) ऋ० १०, १४६, ४। (ख) ऋ० १, ११३, १। (ग) ऋ० ७, ९२, १४।
(घ) ऋ० १, ४६, १। (ङ) ऋ० १०, १६२, ५। (च) ऋ० ५, ४६, ८।
(छ) ऋ० ४, ५५, ३। (ज) ऋ० १, ४३, २। (झ) ऋ० ७, ६६, ११।

तन्नामानि य[१] मिन्द्राणी सरमा[क]रोमशो[ख]र्व्वशी[ग] ॥७९॥
भवत्पथ्या[घ]सिनीवाली[२][ङ] राका[च] चानुमतिः[३][छ] कुहूः ।
गौर्धेनुर्देवपत्न्योऽन्या[४] पथ्या स्वस्त्यथ[५] रोदसी ।
नैपातिकानि पृग्भाञ्जि[६] येषां नामानि कानिचित् ॥८०॥
यदा तु वाग्भवत्येषा[७] सूर्य्याऽमुं लोकमाश्रिता ।
तदा सूक्तमुषा[८][ज] भूत्वा सूर्य्या[झ] च भजतेऽखिलम् ॥८१॥
वृषाकपाय्यृचं[ञ] भूत्वा सरण्यू[ट]र्द्वे च ते ध्रुवम्[९] ।

---

(१) सूक्तार्घानीयमिति क० घ० । सूक्तार्घाणीयमितिपाठो विशुद्धः ।
(२) ऋचस्त्वथ्या(ठ)सिनीवालीति क० घ०, भवत्स्वन्या सिनीवालीति ख०, भवत्यथ्या सिनीवालीति ग० ।
(३) राकोचानुमतिरिति क०, राकोचानुमितिरिति घ०, राका चानुमितिरिति पुस्तकान्तरम् ।
(४) गोरीगौर्धेनुपत्न्योऽन्या इति क० घ०, देवपत्न्योऽन्या इति ङ० पुस्तकान्तरञ्च ।
(५) स्वस्ति चेति ख०,स्वस्तिश्चेति ग० ङ० पुस्तकान्तरञ्च ।
(६) नैपातिकान् पृथग्भाञ्जीति क० ।
(७) भजत्येषेति क० घ० ।
(८) सूक्तमुखेति ख० ग०, तथा सूक्तमुषेति ङ० पुस्तकान्तरञ्च ।
(९) त्वेव तदृचमिति क० घ०, ते ध्रुवमिति पुस्तकान्तरम् ।

---

(क) ऋ० १, ६२, ३ । (ख) ऋ० १, १२६, ७ । (ग) ऋ० ५, ४१, १९ ।
(घ) ऋ० ३, ५४, ५ । (ङ) ऋ० ११, ३२, ८ । (च) ऋ० ११, ३२, ८ ।
(छ) ऋ० १०, ५९, ६ । (ज) ऋ० १, १८१, ६ । (झ) ४, ४४, १ ।
(ञ) ऋ० ७, ६६, ११ । (ट) ऋ० १०, १७, २ । (ठ) ऋ० ७,८७,४ ।

निपातमात्रं भजते द्यविच्च[१] पृथिवी सती ॥ ८२ ॥
सूर्यामिव[२] सतीमेतां गौरीं वाचं सरस्वतीम् ।
पश्यामो वैश्वदेवेषु निपातेनैव केवलाः[३] ॥ ८३ ॥
घोषा[क] गोधा[ख] विश्ववारा[ग] पालोपनिषन्निषत्[४] ।
ब्रह्मजाया[घ] जुहू[ङ]र्नामागस्त्यस्य[५][च] स्वसाऽदितिः[छ] ॥ ८४ ॥
इन्द्राणी चेन्द्रमाता[६] च सरमा[ज] रोमशो[झ]र्वशी[ञ] ।
लोपामुद्रा[ट] च नद्यश्च यमी[ठ] नारी च शाश्वती[७][ड] ॥ ८५ ॥
श्रीर्लक्ष्मीः सार्पराज्ञी[ढ] वाक् श्रद्धा मेधा च दक्षिणा ।
रात्री सूर्या[ढ] च सावित्री ब्रह्मवादिन्य ईरिताः ॥ ८६ ॥

---

(१) क्वचित्तु इति क॰ घ॰, द्युवच्चेति ग॰ ।
(२) पृथिवी त्विति क॰ घ॰ ।
(३) केवलामिति क॰ घ॰ ।
(४) मालोपनिषन्निषत् इति क॰ ख॰ घ॰ ङ॰ ।
(५) छन्दोऽनुरोधात् नाम अगस्त्यस्येति पाठः समीचीनः ।
(६) चन्द्रमातेति ख॰ ।
(७) शश्वतीति क॰ घ॰, तथैव चेति ख॰ ।
(८) सार्व्वराज्ञेति ख॰ ।

---

(क) ऋ॰ १०, ४०, ५ । (ख) ऋ॰ ८, ६९, ९ । (ग) ऋ॰ १, ४, ३ ।
(घ) ऋ॰ १०, १०९, ३ । (ङ) ऋ॰ १, ५८, ४ । (च) १०, ६०, ६ ।
(छ) ऋ॰ १, ४१, २ । (ज) ऋ॰ १, ६२, ३ । (झ) ऋ॰ १, १२६, ७ ।
(ञ) ऋ॰ ५, ४२, १९ । (ट) ऋ॰ १, १७९, ४ । (ठ) ऋ॰ १०, १०, ९ ।
(ड) ८, १, ४३ । (ढ) ऋ॰ ४, ४४, १ ।

नवकः प्रथमस्त्वासां[१] वर्गं[२] स्तुष्टाव देवताः।
ऋषिभिर्देवताभिश्च समूदे[३]मध्यमो गणः॥ ८७॥
आत्मनो भाववृत्तानि जगौ वर्गस्तथोत्तमः।
उत्तमस्य तु वर्गस्य य ऋषिः सैव[४] देवता[५]॥ ८८॥
आत्मानमस्तौद्वर्गस्तु देवतां यस्तथोत्तमः[६]।
तस्मादात्मस्तवेषु स्याद्य ऋषिः सैव[७] देवता॥ ८९॥
संवादेष्वाह वाक्यं यः स तु तस्मिन् भवेदृषिः[८]।
यस्तेनोच्येत वाक्येन देवता तत्र[९] सा भवेत्॥ ९०॥
उच्चावचेषु चार्थेषु निपाताः समुदाहृताः।
कर्म्मोपग्रहणार्थे च[१०] क्वचिच्चौपम्यकारणात्॥ ९१॥
ऊनानां पूरणार्थावा[११] पादानामपरे क्वचित्।

---

(१) तासामिति ख०।
(२) वर्गाः इति क० घ०।
(३) समूहे इति क०, समुद्रे इति ख०।
(४) ऋषिश्चैव चेति घ०।
(५) आत्मनो भाववृत्तानीत्यादि य ऋषिः सैव देवता इत्यन्तपाठः क० घ० पुस्तकयोर्न विद्यते।
(६) देवता चोत्तमस्तु यः इति क० घ०।
(७) आत्मस्तवेष्वेवं भवेदृषैवेति क० घ०।
(८) भवत्यृषिरिति क० घ०।
(९) तेष्विति क० घ०।
(१०) कर्म्मोपग्रहणार्थेष्विति क० घ०।
(११) पूरणार्थन्त्विति क० घ०।

मिताचरेषु ग्रन्थेषु पूरणार्थास्त्वनर्थकाः[१] ॥८२॥
कमीमिद्विति[२]विज्ञेया ये त्वनेकार्थकाश्च ते[३] ।
इव न चित्तु चत्वार[४] उपमार्था भवन्त्यमी[५] ॥८३॥
उपमार्थे[६] नकारस्तु क्वचिदेव निपात्यते ।
मिताचरेषु ग्रन्थेषु प्रतिषेधस्त्वनेकशः[७] ॥८४॥
इयन्त[८] इति सङ्ख्यानं निपातानां न विद्यते ।
प्रयोजनवशा ह्येते[९] निपात्यन्ते पदे पदे ॥८५॥
उपसर्गास्तु विज्ञेयाः क्रियायोगेषु[१०] विंशतिः ।
विवेचयन्ति ते त्वर्था[११]न्नामाख्यातविभक्तिभिः[१२] ॥८६॥

---

(१) पूरणार्थे त्वनर्थकाः इति क॰ घ॰ ।
(२) चामिमिद्वतीति ख॰ ।
(३) त्वन्ये सार्थकाः स्तुतौ इति क॰ घ॰ ।
(४) इवोनचिन्नुचत्वार इति ग॰ । इवेनचिन्नुचत्वार इति ङ॰ ।
(५) भवन्ति ते इति ख॰ ग॰ ङ॰ ।
(६) उपमार्थे इति ग॰ ङ॰ ।
(७) त्वनल्पशः इति ख॰ ग॰ ङ॰ ।
(८) इयन्तु इति ख॰ ।
(९) वशाद् प्रकरणस्यैते इति ग॰ ङ॰ । वशाः प्रकरणस्यैते इति ख॰ ।
(१०) क्रियायोगेनेति ख॰ ग॰ ङ॰ ।
(११) ते त्वर्थमिति ग॰ ङ॰ । ह्यर्थानिति घ॰ ।
(१२) विभक्तिवः इति घ॰ । विभक्तिषु इति ख॰ ग॰ ङ॰ ।

(१)(अनु[क]अ[ख]दन्त[ग])रित्येतानाचार्य्यः शाकटायनः ।
उपसर्गाः क्रियायोगान्मेने तेन चयोऽधिकाः ॥९७॥
चीण्येव लोके लिङ्गानि पुमान् स्त्र्यथ नपुंसकम् ।
नामसूक्तप्रयोगेषु वाच्यं प्रकरणं तथा ॥९८॥
तेषान्तु नामभिर्लिङ्गैर्ग्रहणं सर्वनामभिः ।
कृताकृतस्य सदृशो गृहीतस्य पुनर्ग्रहः ॥९९॥
पादसूक्तर्च्चगर्धर्चनामान्यन्यानि यानि च ।
सर्वे नामानि चैवाङ्गरन्ये चैवं यथा कथा ॥१००॥
प्रधानमर्थः शब्दो हि तद्गुणायत्त इष्यते ।
तस्मान्नानान्वयोपायः शब्दानर्थवशं नयेत् ॥१०१॥
अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत् ।
विप्रकृष्टञ्च सन्दध्यादानुपूर्व्याञ्च कल्पयेत् ॥१०२॥
लिङ्गं धातुं विभक्तिञ्च सन्नयेत् तच तच च ।
यद्यस्याच्छान्दसं वाक्यं कुर्य्यात् तत्तत्तु लौकिकम् ॥१०३॥
यावतामेव धातूनां लिङ्गं रूढिगतं भवेत् ।
अर्थश्चाप्यभिधेयञ्च तावद्भिर्गुणविग्रहः ॥१०४॥
धातूपसर्गावयवगुणशब्दाद्द्विधातुजम् ।
बह्वेकधातुजं वापि यदनिर्वाच्यलक्षणम् ॥१०५॥
धातुजं धातुजाज्जातं समस्तार्थजमेव वा ।

(१) ९६ सङ्ख्यकश्लोकात् १२७ सङ्ख्यकश्लोकपर्य्यन्तं श्लोका· क॰घ॰ चिह्नि-तयो· पुस्तकयोर्नोपलभ्यन्ते । एते ख॰ ग॰ ङ॰ चिह्नितेषु पुस्तकेषूपलभ्यन्ते ।

(क) ऋ॰ १, ९, ४ । (ख) ऋ॰ १, ११, ५ । (ग) ऋ॰ १, ५४, १ ।

वाक्यजं व्यतिकीर्णञ्च निर्वाच्यं पञ्चधा पदम् ॥१०६॥
द्विगुर्द्वन्द्वोऽव्ययीभावः कर्मधारय एव च ।
पञ्चमस्तु बहुव्रीहिः षष्ठस्तत्पुरुषः स्मृतः ॥१०७॥
विग्रहान्निर्वचः कार्यं समासेष्वपि तद्धिते ।
प्रविभज्यैव निब्रूयाद्दण्डार्हो दण्ड्य इत्यपि ॥१०८॥
भार्य्या रूपवती चास्य रूपवद्भार्य्य इत्यपि ।
इन्द्रश्च सोमस्तेवेमिन्द्रासोमौ निदर्शनम् ॥१०९॥
शब्दरूपं पदार्थस्य व्युत्पत्तिः सन्नतिर्गुणः ।
सर्व्वमेतदनेकार्थं दृशानवगमे गुणाः ॥११०॥
सामान्यवाचिनः शब्दा विशेषे स्थापिताः क्वचित् ।
पलायने यथावृत्ति कोनुमर्या इतीष्यते ॥१११॥
विशेषवाचिनस्त्वन्ये सामान्ये स्थापिताः क्वचित् ।
हिमेनाग्निमिति मन्त्रे हिमशब्दो निदर्शनम् ॥११२॥
पदमेकं समादाय द्विधा कृत्वा निरुक्तवान् ।
पुरुषाद:[क] पदं यास्को ऋचे ऋचे इति त्वृचि ॥११३॥
अनेकं सत्तया चान्यदेकमेव निरुक्तवान् ।
अरुणो मासकृन्मन्त्रे मासकृदित्यनेन तु ॥११४॥
पदव्यवायेऽपि पदे एकीकृत्य निरुक्तवान् ।
गर्भे निधानमित्येते न जामय[ख] इति त्वृचि ॥११५॥
पदजातिरविज्ञाता त्वः पदार्थं मिनामनि ।

---

(क) ऋ० १०, २७, २२। (ख) ऋ० १, २३, १६।

स्वरानवगमो धायि(क) वनेनेत्यृचि दर्शितः ॥११६॥
शुनःशेपं(ख) नराशंसं(ग) द्याव्यानः पृथिवीति च ।
निरक्ततेति प्रभृतिस्वर्थादासीत् क्रमो यथा ॥११७॥
वर्णस्य वर्णयोर्लोपो बहूनां व्यञ्जनस्य च ।
अत्राणीतिकपिर्नाभाद्(घ)नीयामित्यथास्तु च ॥११८॥
अर्थात् पदं स्वाभिधेयं पदाद्वाक्यार्थनिर्णयः ।
पदसङ्घातजं वाक्यं वर्णसङ्घातजं पदम् ॥११९॥
अर्थात् प्रकरणाल्लिङ्गादौचित्याद्देशकालतः ।
मन्त्रेष्वर्थविवेकः स्यादितरेष्विति च स्थितिः ॥१२०॥
इति नानान्वयोपायैर्नैरुक्तेयो यतेत यः ।
जिज्ञासुर्ब्रह्मणो रूपमपि दुष्कृत् परं व्रजेत् ॥१२१॥
यथेदमग्रे नैवासीदसदप्यथ वापि सत् ।
जज्ञे यथेदं सर्वं तद्भाववृत्तं वदन्ति तु ॥१२२॥
भावप्रधानमाख्यातं षड्विकारा भवन्ति ते ।
जन्मास्तित्वं परीणामो वृद्धिर्ह्रासं विनाशनम् ॥१२३॥
एतेषामेव षण्णान्तु येऽन्ये भावविकारजाः ।
ते यथावाक्यमप्यूह्याः सामर्थ्यान्मन्त्रवित्तमैः ॥१२४॥
देवानाञ्च पितॄणाञ्च नमस्कारैस्तथैव च ।
अथ व्यस्तं समस्तं वा शृणु व्याहृतिदैवतम् ॥१२५॥
व्याहृतीनां समस्तानां दैवतन्तु प्रजापतिः ।

---

(क) ऋ० १, १५८, ३ । (ख) ऋ० ५, २, ७ । (ग) ऋ० १, १३, ३ ।
(घ) ऋ० ६, ७, ६ ।

व्यस्तानामयमग्निश्च वायुः सूर्यश्च देवताः ॥१२६॥
वाग्देवत्योऽथ वाय्वैन्द्रो यदि वा परमेष्ठिनः।
ओङ्कारो वैश्वदेवो वा ब्राह्मो दैवः क एव वा) ॥१२७॥
भावप्रधानमाख्यातं षट्प्रकारा भवन्ति तु।
जन्मास्तित्वं परीणामो वृद्धिह्रानिर्विनाशनम् ॥१२८॥
एतेषामेव वर्णाः स्युरन्ये भावविकारजाः।
यथावचनमप्यूह्याः सामर्थ्यान्मन्त्रवित्तमैः ॥१२९॥
चीण्येव लोके लिङ्गानि पुमान् स्त्र्यथ नपुंसकम्।
नामसूक्तप्रदेशेषु योज्यं प्रकरणं तनु ॥१३०॥
तेषां तु नामभिर्लिङ्गैर्ग्रहणं सर्वनामभिः।
कुर्वन्नामानि वै वाङ्रन्यदेवत्यया यथा ॥१३१॥
यथेदमग्रे नैवासीदसद्वाप्यथवापि सन्।
जज्ञे यथेदं सर्वन्तु भाववृत्तं प्रचक्षते ॥१३२॥
वाग्देवत्योऽथ वाय्वैन्द्रो यदि वा परमेष्ठिनः।
ओङ्कारो वैश्वदेवो वा ब्राह्मो दैवः क एव वा ॥१३३॥
व्याहृतीनां समस्तानां दैवतं तु प्रजापतिः।
व्यस्तानामयमग्निश्च वायुः सूर्यश्च देवताः ॥१३४॥

इति शौनकाचार्यकृतौ बृहद्देवतायामुपोद्घातप्रकरणम्।

---

आग्नेयं प्रथमं सूक्तं मधुच्छन्दस आदितः[१]।
ज्ञेयास्त्वन्योऽन्यदेवत्या[२] स्तृचाः सप्तात उत्तराः ॥१२५॥
वायव्यः प्रथमस्तेषामैन्द्रवायव उत्तरः।
मैत्रावरुण आश्विन्य[३] ऐन्द्रो यः पञ्चमस्तृचः[४] ॥१२६॥
[५]नान्यः षष्ठादिश्वलिङ्गो गायत्रोऽन्यस्तु यस्तृचः[६]।
बहुदैवतमन्यत्तु[७] वैश्वदेवेषु शस्यते ॥१२७॥
सुषेदुवस्यौ[८]गार्याते[क] गोतमेऽथ स्वजिघ्नि[ख]।
अवत्सारे[ग] परु[घ]च्छेपे[९] अत्रौ[१०] दीर्घतमस्य[ङ]थौ[११] ॥१२८॥

---

(१) आर्षकमिति ग० ङ०। घ० पुस्तकोद्धृतपाठश्च।
(२) सर्वेऽन्यदेवत्या इति ग० ङ०। घ० उ०।
(३) मैत्रावरुणोऽथश्विन इति ख० ग० ङ०। घ० उ०।
(४) त्विन्द्रोवो वैश्वदेवत इति ख०। अथैन्द्रोऽतो वैश्वदेवक इति ग०ङ०।
(५) तन्नामा विश्वलिङ्गो वेति ग० ङ०। घ० उ०।
(६) गायत्रोऽस्त्वपरस्तृचः इति क० ख० घ०।
(७) बहुदेवतमन्यस्त्विति क० घ०। बहुदैवतमन्यत्त्विति ग०।
(८) सुषेऽथ वात्स्ये इति ग० ङ०। घ० उ०।
(९) परुच्छेपे इति ग०। अवत्सारपरुच्छेपे इति ख०।
(१०) पुत्रे इति ख० ग० ङ०। घ० उ०।
(११) तत् एयौ इति ख०।

---

(क) ऋ० १, ५१, ०। (ख) ऋ० ८, ४६, १०। (ग) ऋ० ५, ४४, १०।
(घ) ऋ० १०, १००, ५। (ङ) ऋ० १, १५८, ६।

वसिष्ठे नाभानेदिष्ठे[क] गये[ख] मेधातिथौ मनौ[ग] ।
कक्षीवति[घ][१] विहव्ये[ङ] च बह्वृग्मन्त्येषु चर्षिषु[२] ॥१३९॥
अगस्त्ये बृहदुक्थे[च] च विश्वामित्रे च[३] गाथिनि[छ] ।
दृश्यन्ते विप्रवादास्तु[४] तासु तासु स्तुतिष्विह ॥१४०॥
बह्वीनां सन्निपातस्तु यस्मिन्मन्त्रे प्रदृश्यते ।
आचार्यौ यास्कशाण्डिल्यौ वैश्वदेवं तमाहतुः[५] ॥२४१॥
पादं वा यदि वार्धर्चमृचं वा सूक्तमेव वा ।
वैश्वदेवं वदेत्सर्वं यत्किञ्चिद्बहुदैवतं[६] ॥१४२॥
ऋषिभिर्देवताः सर्वा विश्वाभिः स्तुतिभिः स्तुताः ।
संज्ञा तु विश्वमित्यासां[७] सर्वासामत्र निपातिता[८] ॥१४३॥

---

(१) काक्षीवते इति ख॰ । कक्षीवते इति घ॰ उ॰ ।
(२) चर्षिषु इति ख॰ ग॰ ङ॰ । घ॰ उ॰ ।
(३) विश्वामित्रेऽथेति ख॰ ङ॰ । घ॰ उ॰ ।
(४) विप्रपादाश्चेति क॰ घ॰ च॰ ।
(५) तदाहतुरिति ग॰ ङ॰ । घ॰ उ॰ ।
(६) बहुदैवतमिति क॰ घ॰ ।
(७) विश्वमित्येषेति ख॰ ग॰ ङ॰ । घ॰ उ॰ ।
(८) निपातितौ इति ङ॰ । घ॰ उ॰ ।

---

(क) ऋ॰ १०,६१,१८ । (ख) ऋ॰ ६, २, ८ । (ग) ऋ॰ १, ३६, १६ ।
(घ) ऋ॰ २, ५१, १३ । (ङ) ऋ॰ १, १०८, ६ । (च) ऋ॰ ४, २०, १० ।
(छ) ऋ॰ १, ८, १ ।

सारस्वतः सप्तमस्तु[१] एताः प्रउगदेवता।[२]।
अविध्यमान ऊने वा प्रउगेष्वत आवपेत्[३] ॥१४४॥
सरस्वती तु द्विविधा ऋक्षु सन्दृश्यते स्तुता[४]।
नदीवच्चैव वाग्वेव तयेवमुभयं स्मृतं[५] ॥१४५॥
[६]सुरूपकृत्नु[क]मित्यैन्द्रं सप्त चान्योऽन्यतः परं।
पडादह[७] स्वधामिति मारुत्योऽनन्तरा ऋचः ॥१४६॥
एका वीलु[ख]चिदिन्द्रायं[८] मरुद्भिः सह गीयते।

---

(१) सारस्वतस्तु सप्तम इति ग॰ ङ॰। घ॰ उ॰।
(२) सारस्वतस्तु उत्तरमष्टमा प्रउगदेवता इति ख॰।
(३) अविध्यमान इत्यादिश्लोकार्द्धं ख॰ ग॰ ङ॰ चिह्नितपुस्तकेषु नोपलभ्यते।
(४) ऋक्षु सर्वासु सा स्तुतेति ग॰ ङ॰। घ॰ उ॰।
(५) नदीवद्देवतावच्च सूत्राचार्यस्तु शौनक इति ख॰। अत्र सूत्राचार्य इति ग॰ ङ॰। घ॰ उ॰।
(६) इत पूर्वं ख॰ ग॰ ङ॰। घ॰ उ॰ चिह्नित पुस्तकेषु नदीवन्निगमा षट् ते सप्तमो नेत्युवाच ह। अम्बेकाच दृषद्वत्यां चिन्नइच सरस्वती। इयं शुष्मेभिरित्येतं मेने यास्कस्तु सप्तमम्। पञ्चो सारस्वत्यैता याज्या मैत्रायणीयके। प्राधान्याद्धविष पश्यन् वाच एवैतरेऽमवीत्। इत्यधिकं पठ्यते।
(७) वसादह इति ख॰ यसादह इति घ॰।
(८) एकाविद्युचिमिन्द्रोयमिति क॰। एकाविग्रुचिदिन्द्रायेति ख॰। एकापीलुचिदिन्द्रायेति ग॰। एकावालुचिदिन्द्रायेति ङ॰।

---

(क) ऋ॰ १, ४, १। (ख) ऋ॰ १, ६, ५।

तस्या एकान्तरायास्तु अर्धर्चनयो(१)र्द्विदेवतः ॥१४७॥
मरुद्गणप्रधानोऽयं द्यौरिन्द्रस्तु(२) विचिकित्सितः ।
मन्दू(क)(३)समानवर्चस्यौ(४) मन्दुनावासवर्चसा ॥१४८॥
मन्दू इति(ख) प्रगृह्णन्ति(५) येषामेव(६) द्विदेवतः ।
एकदैवत्यमाम्नायो विज्ञेयाध्ययनात् पदं(७) ॥१४९॥
रोदसी(ग) देवपत्नीनामथर्वाङ्गिरसे(घ) यथा(८) ।
(९)मरुद्गणप्रधानेयमाचार्याणां स्तुतिर्मता ॥१५०॥
मरुद्गणप्रधानत्वादिन्द्रस्तु विचिकित्स्यते(१०) ।

---

(१) अर्धर्चोऽन्योर्द्विदेवत इति घ० ङ० । ङ० ।
(२) द्यौस्त्वं चेति ख० ग० । घ० ङ० । मरुद्गणप्रधानो द्यौस्त्वं चेन्द्रः इति ङ० ।
(३) मन्दू इति ख० ।
(४) समानवर्चस्यमिति ग० । समानवर्चसा इति घ० ।
(५) मन्दू इति प्रगृह्णन्तीति क० घ० ङ० च० ।
(६) एषमेवेति ख० । येषामेवेति ग० ङ० । घ० ङ० ।
(७) विद्यायात्ययमात्पदमिति ख० । विद्यानाध्ययनात्पदमिति क० घ० ङ० ।
(८) रोदसी इत्यादि श्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(९) मरुद्गणेति ङ० ।
(१०) विचिकित्सितः इति ख० ग० । घ० ङ० ।

---

(क) ऋ० १, ६, ७ । (ख) ऋ० १, ६, ७ । (ग) ऋ० १, १६७, ५ ।
(घ) ऋ० १०, ६२, १ ।

मरुद्गणं महेन्द्रस्य[१] समांशं सकलं विदुः[२] ॥१५१॥
अग्निमित्यग्निदैवत्यं पादस्तत्र द्विदैवतः[३] ॥
निर्मथ्याहवनीयार्थावग्निनाग्निः[४] समिध्यते ॥१५२॥
द्वितीये द्वादशर्चे तु प्रत्यृचं देवताः स्तुताः।
स्तूयन्ते ह्यग्निना सार्द्धं तासां नामानि मे शृणु[५] ॥१५३॥
प्रथमायां स्तुतस्त्वेध्मो[क][६] द्वितीयायां तनूनपात्[ख]।
नराशंसं[ग] तृतीयायां चतुर्थ्यां स्तूयते त्विलः[घ] ॥१५४॥
बर्हि[ङ]रेव तु पञ्चम्यां द्वारो[च] दैव्यस्ततोऽन्यया[७]।
नक्तोषा सा तु सप्तम्यामष्टम्यां तु स्तुतौ[८] सह ॥१५५॥

---

(१) मरुद्गणमहेन्द्रस्येति घ०। मरुद्गणेनेन्द्रस्येति क० ख० ग० च०।
(२) समासं शाकलं विदुरिति क० ग० च०।
(३) पादस्तत्र द्विदैवतः इति ग० ङ०। घ० ङ०।
(४) निर्मथ्याहवनीयार्थो ह्यग्निनाग्निरिति क० ग०। निर्मथ्याहवनीयार्थेऽग्निनाग्निरिति च०।
(५) श्रूयते देवताऽथासां नामानि शृणुते च नः इति क० ग० च०।
(६) समिद्धस्त्विति क० ग० च०।
(७) अन्ययेति ख०, अन्यथा इति च०।
(८) संस्तुतौ इति ग०, स स्तुतौ इति ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १३, ७५, २। (ख) ऋ० १, १३, २। (ग) ऋ० १, १३, ३।
(घ) ऋ० १, १२८, १। (ङ) ऋ० ३, ५३, १०। (च) ऋ० ५, ५, ५।

दैव्या[क]विति[१] तु होतारौ नवम्यामृचि संस्तुताः ।
तिस्रो देव्यो दशम्यां तु ज्ञेयस्त्वष्टे[ख]व तु स्तुतः ॥१५६॥
एकादश्यां तु सूक्तस्य स्तुतिं[२] विद्याद्वनस्पतिम्[ग] ।
द्वादश्यां तु स्तुता देव्यो विद्यात्स्वाहाकृती[घ]रिह[३] ॥१५७॥
सूक्तेऽस्मिन् प्रत्यृचं यास्तु[४] देवताः परिकीर्त्तिताः ।
ता एव सर्वास्वाप्रीषु द्वितीयायां[५] विकल्प्यते[६]॥१५८॥
प्रैषैः सहैव हैतानि त्वेकादश प्रचक्षते[७] ।
यजुषः[८] प्रैषसूक्तं वा दशैतानीतराणि तु ॥१५९॥
सौत्रामणानि[९] तु त्रीणि प्राजापत्याश्वमेधिके ।

---

(१) देव्याविति ख॰ ङ॰ ।
(२) स्तुतमिति ङ॰ ।
(३) देवी विद्यात्स्वाहाकृतीरितीति ग॰ ।
(४) प्रत्यृचे यास्त्विति क॰ घ॰ च॰ ।
(५) द्वितीया त्विति ख॰ ।
(६) विकल्प्यते इति ख॰ ग॰ च॰ ।
(७) प्रैषैः सहाप्रीसूक्तानि सान्येकादश सन्ति चेति ख॰ ग॰ ङ॰। सहाप्री इत्यत्र सहैवेति ख॰ ।
(८) यजूंषीति ख॰ ग॰ ङ॰ ।
(९) सौत्रामणीतीति क॰ घ॰ च॰ ।

---

(क) ऋ॰ १, २७, १२ । (ख) ऋ॰ १, १३, २ । (ग) ऋ॰ ६, ४८,१० ।
(घ) ऋ॰ १, १८८, ११ ।

पुरुषस्य च यन्मेधे यजुःष्वेव तु तच्च ह[1] ॥१६०॥
अत्रैव प्रैषसूक्तं स्यान्न यजुःष्वाद्रियेत तत्[2]।
तेषां प्रैषकृतं[3] यच्च यच्च[4] दीर्घतमा जगौ ॥१६१॥
मेधातिथं[5] यदुक्तं च चौष्णेवोभयवन्ति तु।
ऋषिर्गृत्समदो[(क)][6] यच्च वाध्यश्व[(ख)]स्तु[7] यदुच्यते ॥१६२॥
नराशंसवद्चि[(ग)]स्तु[8] दद्दृशेऽथ[9] यदौर्वशः।
तनूनपादगस्त्यस्तु[10] जमदग्नि[(घ)]स्तु[11] यज्जगौ ॥१६३॥
विश्वामित्र[(ङ)] ऋषिर्यच्च जगौ वै काश्यपोऽसितः[(च)]।
मेधातिथेस्त्वृचां[12] यास्तु प्रोक्ता द्वादश देवताः ॥१६४॥

---

(१) तानि षडिति ख० ग० ङ०।
(२) यजुष्वादि येषु चेति क० घ० च०।
(३) प्रैषगतं सूक्तमिति ग०।
(४) यच्च तच्चेति ख०, यत्तु तच्चेति ङ० पुस्तकान्तरञ्च।
(५) मेधातिथेरिति ख०, मेधातिथाविति ग० ङ० पुस्तकान्तरञ्च।
(६) ऋषौ गृत्समदे इति ग० ङ० पुस्तकान्तरञ्च।
(७) वाध्यश्चे चेति ग० ङ० पुस्तकान्तरञ्च।
(८) ऋचेश्चेति ख० ग० ङ० पुस्तकान्तरञ्च।
(९) ददृशे चेति ख० ग० ङ० पुस्तकान्तरञ्च।
(१०) चेति ग० ङ० पुस्तकान्तरञ्च।
(११) वामदेवश्चेति ग०, जामदग्न्यश्चेति ङ० पुस्तकान्तरञ्च।
(१२) ऋचः इति ख० ग० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० २, १९, ८। (ख) ऋ० १०, ६९, ५। (ग) ऋ० १, १३९;९।
(घ) ऋ० ३, ५३, १५। (ङ) ऋ० ३, ५३, ९। (च) ऋ० १, ७६, १०।

सम्पद्यन्ते यथाग्नीकाः[१] सम्पदं तां निबोधत।
इध्मो[क]यः सोऽय[२]मेवाग्निरयं होधो[ख][३] समिध्यते।
भातेवैतत्कृतं[४] रूपं भातो[ग] होध्मः[५] समिध्यते[घ] ॥१६५॥

इति बृहद्देवतायां द्वितीयोऽध्यायः।

---

(१) यथाग्निं ताः इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(२) सर्व्वमिति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(३) होध्म इति ग॰ ङ॰ पुस्तकान्तरञ्च।
(४) भ्रातैवैतद्रूपमिति क॰ ग॰ घ॰ ध॰।
(५) होध्मे इति ग॰ ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ ८, ४९, २। (ख) ऋ॰ ७, १, १६। (ग) ऋ॰ ५, ८, ५।
(घ) ऋ॰ ४, १५; ४।

## अथ तृतीयोऽध्यायः ।



तनूनपाद्यस्त्वेव नाम्ना सोऽप्युच्यते तनूः[1] ।
नपा[क]दिति प्रजामाहुरग्नेस्तस्य[2] च सम्भवम् ॥ १ ॥
नराशंसन्त्विहैके तु[3] होतृभिस्त्वाहुरध्वरे[4] ।
नराः शंसन्ति सर्व्वेऽस्मिन्नासीना इति वादिनः[5] ॥ २ ॥
तदाहुरग्निमेवायं[6] नराशंसोऽध्वरे त्वयम्[7] ।
नरैः शस्यत आसीनैराहुस्त्वृत्विजो नराः[8] ॥ ३ ॥
इळा त्विति कृतं रूपं ह्युषिभिर्गतिकर्मणः[9] ।

---

(१) यत्तन्वसौ तनुमिति ख॰ ग॰ ङ॰ पुस्तकान्तरस्थ ।
(२) अमुतोऽस्येति ख॰ ग॰ ङ॰ पुस्तकान्तरस्थ ।
(३) नराशंसमिहैके त्विति ख॰ ग॰ ङ॰ पुस्तकान्तरस्थ ।
(४) अग्निमाहुरथेतरे इति ग॰ ङ॰ पुस्तकान्तरस्थ ।
(५) याऽध्वरे इति ग॰ ङ॰ पुस्तकान्तरस्थ ।
(६) एतमेवाहुरन्येऽग्निमिति ग॰ ङ॰ पुस्तकान्तरस्थ ।
(७) त्वयमिति ख॰ ग॰ ङ॰ पुस्तकान्तरस्थ ।
(८) चैवर्त्विजो नरः इति ख॰ ग॰ ङ॰ पुस्तकान्तरस्थ ।
(९) इडत्विमिकृतं रूपमीडेश्च स्तुतिकर्म्मणः इति ग॰ ङ॰ पुस्तकान्तरस्थ। इड इत्यत्र इम, इडेश्च इत्यत्र ईशोश्चेति ख॰, स्तुतिकर्म्मणः इत्यत्र, गतिकर्म्मणेति च॰ ।

---

(क) ऋ॰ १, १४३, १ ।

इडावां[क]स्तेन चोक्ताग्निरिरिणा[ख](१)गतिकर्मणा(२) ॥ ४ ॥
वर्हि[ग]रेवायमग्निस्तु सर्वं हि परिवृंहितम् ।
अनेन यः स्तुतो(३) वामन्निमेन परिवृह्यते(४) ॥ ५ ॥
द्वार[घ]स्तु(५) देव्यो याः प्रोक्ता विश्वेषां तास्तु यज्ञतः ।
अग्नायी[ङ]मनुवर्त्तन्ते तथाग्नाय्यग्निमेव च(६) ॥ ६ ॥
अग्नौ ध्रुवं स्थितास्तास्तु(७) स्तूयन्ते चाग्निना(८) सह ।
प्राधान्यन्तासु चैवाग्नेः स्तुतिम्वय(९)हविःषु च ॥ ७ ॥
नक्तोषा सा(१०) च ये देव्यावाग्नेय्यावेव ते स्मृते ।

---

(१) इडिनेति ग०, ईडिनेति ङ० पुस्तकान्तरञ्च ।
(२) वर्धिकर्म्मिणेति ग०, वर्धिकर्म्मणेति ङ०, बुद्धिकर्म्मणेति पुस्तकान्तरं ।
(३) यद्धुत इति ग० ङ० पुस्तकान्तरञ्च ।
(४) परिवृंहित इति ग० घ० ङ० ।
(५) द्वारस्त्वेति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) आग्नायीमन्ववर्त्तन्त नाग्निं नाग्नाय्य एव चेति क० घ० च० ।
(७) ध्रुवास्थितत्वात्त्विति क० घ० च० ।
(८) संस्तूयन्तेऽग्निनेति ख० ग० ङ० ।
(९) स्तुतिम्त्वेति ग० ङ० पुस्तकान्तरञ्च ।
(१०) नक्तोषाऽसौ इति ख० ग० ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ४, २, ५ । (ख) ऋ० ८, ८०, १ । (ग) ऋ० ३, ५३, १७ ।
(घ) ऋ० १, १३, ६ । (ङ) ऋ० १, २२, १२ ।

श्यामाग्नेयी[१] हि कालस्य तस्यैवोषाः[क] कलैव तु[२] ॥ ८ ॥
तम उच्छत्यु[घ]षा नक्ता[ङ] नक्तीमां हिमविन्दुभिः ।
अपि वा[३] व्यक्तवर्णेति नक्त पूर्वा वे[च]रिदं[४] भवेत्[५] ॥ ९ ॥
नाम्ना भवत्युषा[६]श्चैव सैषा[७] प्रागुदयाद्रवेः ।
[८]सा हि वोषा[९] भवत्यादौ मध्ये प्राप्ते तमस्वती[१०] ॥ १० ॥
देव्याविति[११] तु होतारावुभौ[१२] पार्थिवमध्यमौ ।

---

(१) भाव्याग्नेयीति ख०, श्यावाग्नेयीति ग०, श्याव्याग्नेयीति ङ० पुस्तकान्तरच ।
(२) किला(ख)ऽवमे(ग)ति क० घ० च० ।
(३) अभि वेति ख० ।
(४) चेदिदमिति ख० ।
(५) तम उच्छत्युषेति श्लोकः क० घ० च० पुस्तकेषु न दृश्यते ।
(६) उषाः इत्यत्र उषेति पाठः संगतः ।
(७) श्वेषेति ख० ।
(८) ख० ग० ङ० पुस्तकेषु, सा हि वोषेति श्लोकार्द्धं, नाम्ना भवत्युषाश्चैवेति श्लोकार्द्धात् प्राक्, पठितं ।
(९) दोषेति क० घ० च० ।
(१०) निशीथे सा तमस्विनीति ख० ग० ङ० पुस्तकान्तरच ।
(११) देव्याविनीति ख० ग० ।
(१२) अग्नी इति ग० ङ० पुस्तकान्तरच ।

---

(क) ऋ० १, ४६, १ । (ख) ऋ० १ ९२,४ । (ग) ऋ० ३, ५४, ५ ।
(घ) ऋ० १, ४६, १ । (ङ) ऋ० १, ७३, ७ । (च) ऋ० १,७२, ६ ।

दिव्यादग्नेस्तु(१) जज्ञाते देव्यौ तेनेह जन्मना(२)॥ ११ ॥
तिस्रस्तु देव्यो याः प्रोक्तास्त्रिस्थानैवेह सा तु वाक्।
त्रिविधेनोच्यते नाम्ना ज्योतिःषु त्रिषु वर्त्तिनी॥ १२॥
अग्निमेवानुगेला(३) तु मध्ये सैन्द्री(४) सरस्वती।
अमुं स्थिताधिलोकन्तु(५) भारती भारतो ह्यसौ॥१३॥
सैषा तु त्रिविधा वै वाग्दिवि च व्योम्नि चेह च।
व्यस्ता(६)चैव समस्ता च भजतेऽग्नीनिमानपि(७)॥१४॥
त्वष्टा तु यः सोऽयमेव(८)पार्थिवोऽग्निरिति श्रुतिः(९)।
पार्थिवस्यास्य वर्चः स्युः कस्याप्यृक्(१०)चार्त्तवेषु च(११)॥१५॥
त्विषित(क)स्त्वष्टुतो वा स्यात् (१२)तूर्णमश्नुवतीति वा(१३)।

---

(१) इति ख० ग० ङ० पुस्तकान्तरेषु।
(२) कथ्यत इति क० ख० ङ० च०।
(३) चानुग्नेलेति ख०, चानुसेलेति क० घ० च०।
(४) प्राप्तेति ख० ग० ङ० पुस्तकान्तरेषु।
(५) स्थितविलोकन्त्विति क० घ० च०।
(६) व्याप्तेति क० घ० च०।
(७) भजत्यग्नीनिमानन्विति क० घ० च०।
(८) त्वष्टामेवेति ख० ङ० पुस्तकान्तरेषु, यत् स्वयं प्रोक्त इति ग०।
(९) स्तुतिरिति ख० ग० ङ० पुस्तकान्तरेषु।
(१०) कास्यावोदिति ख०, कस्याप्यगिति ङ० पुस्तकान्तरेषु।
(११) पार्थिवो वाप्राश्चे च कौत्सा त्रिस्थार्त्तवेषु चेति क० घ० च०।
(१२) तुचिते वा स्यादिति ख०, त्वक्षतेर्वा स्यादिति ग० ङ० पुस्तकान्तरेषु।
(१३) अश्नुत एव वेति ख० ग०, वा इत्यत्र चेति ङ० पुस्तकान्तरेषु।

---

(क) ऋ० १०, ८४, २।

कर्मसु त्वरणां वेत्ति [१]तेन नामैत[२]दश्नुते ॥१६॥
यः सहस्तमौजस्तु [३]रवेश्चन्द्रमुपाश्रितः[४]।
सोऽयं[५] त्वष्टारमेवाग्निः [६]परं वन्दे च यन्मधु[७,(क)] ॥१७॥
प्रादाद्दध्यङ्ङ्च [८]सुप्रीतः पुत्राय[९] यदथर्वणे[१०]।
स चाभवदृषिस्तेन ब्रह्मणा वीर्यवत्तमः[११] ॥१८॥
तमृषि[१२]र्निषिषेधेन्द्रो [१३]मैवं वोचः [१४]कश्चिन्मधु।
न हि प्रोक्ते मधुन्यस्मिन् जीवन्तं त्वोत्सृजाम्यहं[१५] ॥१९॥

---

(१) कर्मसूत्तारश्यो वेत्तीति ग० ङ०, वेत्तीत्यत्र वेत्तीति ख० पुस्तकान्तरञ्च।
(२) नाश्नैतदिति ख०।
(३) सहस्तमो रश्मिरिति ग० ङ०।
(४) चन्द्रमसेऽश्रित इति क० घ० च०।
(५) सोऽप्यीति ख० ग० ङ० पुस्तकान्तरञ्च।
(६) ग्रमिमिति ग० ङ० पुस्तकान्तरञ्च।
(७) वेदवतं मनुमिति ख०, वेद च यन्मध्विति ग०, वेद च यन्मध्विति ङ०, देव च यन्मध्विति पुस्तकान्तरं।
(८) च्यपीति ख० ग० ङ० पुस्तकान्तरञ्च।
(९) सुतायेति ख० ग० ङ० पुस्तकान्तरञ्च।
(१०) तदथर्वण इति ख० ग० ङ० पुस्तकान्तरञ्च।
(११) दीप्तिमत्तरः इति ख० ग० ङ० पुस्तकान्तरञ्च।
(१२) तं त्वृषिरिति क० घ० च०।
(१३) निषिषिधेन्द्र इति क० घ० च०।
(१४) मेदं वाचः इति क० घ० च०।
(१५) मधौ प्रदत्ते जीवनं त्वहमुत्सृजे इति क० घ० च०।

---

(क) ऋ० १, ११४, १०।

तमृषिं त्वश्विनौ देवौ विधिव(१)न्मध्वयाचतां(२) ।
स च ताभ्यां तदाचष्टे यदुवाच शचीपतिः ॥२०॥
तमब्रूतान्तु नासत्यावाश्वेन (३)शिरसाऽभवत् ।
मध्वाशु ग्राहय त्वं न(४)मेन्द्रस्त्वां हनिष्यति(५) ॥२१॥
आश्वेन (६)शिरसा तौ तु (७)दध्यङ्ङाह यदश्विनौ(८) ।
तदास्येन्द्रोऽहरत्तन्तं (९)न्यधात्तामस्य तौ शिरः(१०) ॥२२॥
दधीच(क)स्तु(११)च्छिरस्त्वाश्वं हृतं वज्रेण वज्रिणा ।
पपात सरसो मध्ये पर्वते शर्यणावति(ख) ॥२३॥
तदश्वस्तु(१२) समुत्थाय भूतेभ्यो विविधान् वरान् ।

---

(१) विविक्त इति ग० ङ० पुस्तकान्तरञ्च ।
(२) याचत्विति क० ख० ङ० च० ।
(३) वाप्र्येनेति ग० ङ० पुस्तकान्तरञ्च ।
(४) त्वावामिति क० ख० घ० च० ।
(५) मेन्द्रस्त्वावधीत्ततः इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(६) चाप्र्येनेति ङ० पुस्तकान्तरञ्च ।
(७) ताभ्यामिति ख०, तत्त्विति क० घ० च० ।
(८) यदश्विनोरिति क० घ० च० ।
(९) तदस्येन्द्रो हरस्येहेति ख० ।
(१०) यावनधत्तामस्य यच्छिर इति ग०, नवतामस्य यच्छिरः इति ख०, चान्यनधत्तामस्य चच्छिरः ङ० पुस्तकान्तरञ्च ।
(११) दधीचश्चेति ग० ङ० पुस्तकान्तरञ्च ।
(१२) तच्छिरस्त्विति क० ख० घ० च० ।

---

(क) ऋ० १, ८४, १३ । (ख) ऋ० १, ८४, १४ ।

प्रादात्स[1]युगपर्यन्तं तास्वेवाप्सु न्यमज्जत[2] ॥२४॥
त्वष्टा रूपविकर्त्ता च योऽसौ माध्यमिके गणे।
स्तुतः स च निपातेन[3] सूक्तन्तस्य न विद्यते ॥२५॥
(क)वनस्पतिं तु यं प्राहुरयं सोऽग्निर्वनस्पतिः।
अयं वनानां हि पतिः पाता पालयतीति च[4] ॥२६॥
अग्निर्व्वत्समदेना(ख)ऽयं वनस्पतिवदीडितः।
मन्दस्वे(ग)त्यस्य [5]सूक्तस्य [6]षड्चस्य तृतीयया ॥२७॥
यूपवत्तस्वचैव स्तुतिर्याच [7]प्रसङ्गजा।
समस्तेनैव सूक्तेन [8]तृतीये सा तु मण्डले ॥२८॥
स्वाहाकृतीष्व(घ)सङ्ख्यास्तु [9]विदुषां मतयोऽभवन्।

---

(१) प्रादायेति ख० ग० ङ० पुस्तकान्तरञ्च।
(२) निमज्जतीति ख० ग० ङ० पुस्तकान्तरञ्च।
(३) निपाते चेति क० घ० च०।
(४) वेति क० घ० च०।
(५) मन्दस्वेति चेति ग० ङ० पुस्तकान्तरञ्च।
(६) सूक्ते चेति ग०।
(७) यास्येति ग० ङ० पुस्तकान्तरञ्च।
(८) सर्व्वेषामतिसूक्तेनेति ख० ग० ङ०, सर्व्वेषा यतिसूक्तेनेति पुस्तकान्तरं।
(९) क० घ० च० पुस्तकेषु, स्वाहाकृतास्वसंख्यास्त्विति पाठोऽस्ति। स्वाहाकृतयोऽनेकास्त्येति ख० ग० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० ६, ४८, १०। (ख) ऋ० २, १६, ८। (ग) ऋ० १, २६, ५।
(घ) ऋ० १, १८८, ११।

तत्त्वं सोऽय[1]मेवाग्निर्भवतीति विनिश्चयः ॥२९॥
अयं कर्त्ता च देवानां [2]साक्षतिस्तामिहैकजा।
अयं प्रसूतिर्भूतानां स तेषा[3]मयमव्ययः ॥३०॥
तनूनपा[क]द्वितीया तु [4]नराशंस[ख]वती च या।
समश्नुते [5]प्रयोक्तव्ये विश्वेवोभयवत्त्विह[6] ॥३१॥
नराशंसवती वा स्या[7]द्वितीयेह [8]प्रजार्थिनां।
वलकामोऽय वा यः स्या[9]द्भूरिमिच्छति वापि [10]यः[11] ॥३२॥
आग्नेयमिति[12] यत्त्वेभि[13]र्वैश्वदेवमिहोच्यते।

(१) त्वयमिति ग॰ ङ॰ पुस्तकान्तरञ्च।
(२) अयं हि कर्त्ता साक्षानामिति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(३) सर्वेषामिति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(४) चेति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(५) समश्नेते इति ख॰ ग॰, समश्येते इति ङ॰ पुस्तकान्तरञ्च।
(६) उभयवत्स्यितिति ग॰, उभयवतु लिति ङ॰, उभयवतु चेति पुस्तकान्तरं।
(७) चास्यादिति ग॰ ङ॰।
(८) चेति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(९) अन्नकामो वेति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(१०) भूतिमिच्छेद्यापीति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(११) वेति ग॰।
(१२) आग्नेयं सूक्तमिति ख॰ ग॰ पुस्तकान्तरञ्च, आग्नेये सूक्तमिति ङ॰।
(१३) सूक्तमेभिर्यदिति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।

(क) ऋ॰ १, १८८, २। (ख) ऋ॰ १, १४२, ३।

न सावित्रे क्रयामी[क]ति न सूर्य्यायां[ख] क्रतौ मुखे[१] ॥४५॥
न चैवैवं प्रपादेषु[२] मन्त्रेष्वन्येषु केषुचित्।
न च यत्र सजोषेति पदं वा स्यात् सजू[ग]रिति ॥४६॥
यस्मिन्[३] प्रसङ्गादपि तु वक्तीनां परिकीर्त्तनम्।
वैश्वदेवं तदप्याह स्थविरो लोमकायनः[४] ॥४७॥
असंस्तुतं संस्तुतवत्[५] प्रदिष्टं दैवतं क्वचित्।
मन्त्रेस्तदृषयोर्ब्रूवन्ति[६]तान्तु बुध्येत शास्त्रतः[७] ॥४८॥
आदौ तु मध्ये वान्ते च विधादृषु च कर्म्मभिः[८]।
कर्म्माण्यनुपदिष्टानि प्रदिष्टान्यपि तु क्वचित्[९] ॥४९॥
कर्म्मैव तावत्सावित्र्यां निविदि स्तौति कर्म्मणा।

---

(१) मखे इति ग॰ ङ॰।
(२) प्रवादेष्विति ख॰ ग॰ ङ॰।
(३) यस्मिन्निति क॰ घ॰ च॰।
(४) रोमकायनः इति ख॰ ङ॰।
(५) स्तुतं वायीति ख॰ ग॰ ङ॰।
(६) देवताम्नृषयोऽचन्तः इति क॰ घ॰ च॰।
(७) शास्त्रविदिति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(८) पृथक्लेषु च कर्त्तृभिरिति ग॰ घ॰, पृथक्क्षेषु च कर्त्तृभिरिति पुस्तकान्तरं।
(९) क्त्तवदिति क॰ घ॰ च॰।

---

(क) ऋ॰ १, ३५, १। (ख) ऋ॰ ५, ७३, ५। (ग) ऋ॰ १, २३, ७।

यद्वेनुमष्ट्वनडुहो[१] वोढा दोग्ध्याग्नुरेव वा ॥५०॥
भार्गेयः स्तौति चाग्न्यादीन्मित्रादीनश्वमंस्तुतौ[२]।
यदेभिरिति चैतस्मिन् वैश्वदेवेऽग्निमर्चति ॥५१॥
तदाङ्गराद्यवन्ते च प्रायशोऽन्यां स्तुवन्नृषिः[३]।
प्रातर्योगात्[क][४] प्रसङ्गाद्वा स्तौत्यन्यामपि देवताम् ॥५२॥
यस्यां वदत्यर्थवादान्[५] सा ज्ञेया सूक्तभागिनी।
यान्तु स्तौति प्रसङ्गेन सा विज्ञेया निपातिनी ॥५३॥
चतुर्द्धा भण्यते[६] चास्मिन् सूक्ते वै[७] सूक्तभागिनी।
यस्मिन् सर्वांस्तु राजर्षीनृषीन् वापि स्तुवन्नृषिः ॥५४॥
मेधातिथिरगस्त्यस्तु[८] बृहदुक्थो मनुर्यमः[ख]।
ऋजिश्वा[ग] च सुकर्ष्य शार्यातो[घ] गोतमो लुशः[९] ॥५५॥

(१) यद्वेनुः सायनडुहाविति ङ॰ पुस्तकान्तरञ्च।
(२) चाश्वसंस्तुताविति क॰ ख॰ घ॰ च॰।
(३) चन्याः स्तुवन्नृचः इति ग॰ ङ॰ पुस्तकान्तरञ्च।
(४) प्रतियोगादिति ग॰ ङ॰ पुस्तकान्तरञ्च।
(५) वदन्त्यर्थवादाः इति क॰ घ॰ च॰।
(६) न तु व्याहन्यते इति क॰ घ॰ च॰।
(७) वेति ग॰।
(८) चेति ख॰ घ॰।
(९) मानवो यम इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।

(क) ऋ॰ १०, ४१, २। (ख) ऋ॰ ६, २, ८। (ग) ऋ॰ ५, २९, ११।
(घ) ऋ॰ ३, ५१, ७।

खस्त्याचेयः परुच्छेपः कचीवा[क]नाथिरौर्वश:[१] ।
नाभाक[ख]श्चैव निर्दिष्टो दुवस्यु[ग]र्ममतासुत:[२] ॥५६॥
विहव्य:[घ] कश्यप ऋषि[३]रवत्सारस्य नामयः[ङ] ।
वामदेवो मधुच्छन्दाः पार्थो दक्षसुता[४]दितिः ॥५७॥
जुह्वर्ऽऽत्मद[च]श्चर्षिर्देवाः सप्तर्षयश्च[५] ये ।
तापसोऽग्निर्ऋषिः[६] कुत्सः[छ] कुसीदी चित[ज] एव च ॥५८॥
बन्धुप्रमृतयश्चैव चत्वारो भ्रातरः पृथक् ।
विष्णुश्च नेजमेषश्च नाम्ना संवनन[७][झ]श्च यः ॥५९॥
एते तु सर्व्वे[८] एवास्य विश्वैः स्वैः कर्म्मजैर्गुणैः ।
समस्तैरथ च[९] व्यस्तैः पृथक्सूक्तेषु तुष्टुवुः ॥६०॥

---

(१) उर्व्वशुरिति ङ० पुस्तकान्तरञ्च ।
(२) ममतासुताः इति ष० च० ।
(३) चर्षिरिति ख० ङ० पुस्तकान्तरञ्च ।
(४) पार्थोदक्षसुतेति क० घ० च० ।
(५) देवास ऋषयश्चेति ङ० पुस्तकान्तरञ्च ।
(६) यमोऽचिन्तापसः इति ग० ङ० पुस्तकान्तरञ्च ।
(७) सम्बवन इति ग० ।
(८) सर्व्वा इति क० घ० च० ।
(९) वेति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, १२६, २ । (ख) ऋ० ८, १४, २ । (ग) ऋ० १०, १००, १२ । (घ) ऋ० १, १०८, ६ । (ङ) ऋ० १, १३९, ९ । (च) ऋ० २, १९, ८ । (छ) ऋ० १, १०६, ६ । (ज) ऋ० १, ५२, ५ । (झ) ऋ० १०, ९३, १२ ।

पार्थिवो द्रविणोदा[क]ग्निः[१] पुरस्ताद्यस्तु कीर्त्तितः।
तमाङ्गिरिन्द्रं दाढ्लात्[२]द्के तु बलवित्तयोः ॥६१॥
अयं हि द्रविणोदाऽग्निरयं दाता बलस्य हि।
द्रविणोदाग्निरेवायं द्रविणोदा[ख]स्तदोच्यते ॥६२॥
आग्नेयेष्ववदृश्येत[३] प्रवादाद्द्रविणोदसः।
[४]ऐन्द्रस्य नवकस्येह[५] यदैन्द्रावरुणं परम् ॥६३॥

---

(१) द्रविणोदोऽग्निरिति क॰ ख॰ च॰।

(२) अतिदाढ्लादिति ङ॰ पुस्तकान्तरञ्च।

(३) आग्नेयेष्वेव दृश्यन्ते इति ग॰।

(४) ख॰ ङ॰ चिह्नितपुस्तकयोः, पुस्तकान्तरे च ऐन्द्रस्य नवकस्येहेति श्लोकार्द्धात्प्राक्, द्रविणोदाग्निरेवायमिति श्लोको न विद्यते। तत्र,—

जायते च बलेनायमध्येत्वृषिभिरध्वरे।
उर्वीषि द्रविणां प्राङ्हविषो यत्र जायते ॥
दातारश्चर्त्विजस्तेषां द्रविणोदास्ततः स्वयम्।
ऋषीणां पुत्र इत्येषां दृश्यते सहसोपदैः ॥
मध्यमाद्वा यतो जज्ञे तस्माद्वा द्रविणोदसः।

एतत्सार्द्धश्लोकद्वयं दृश्यते। ङ॰ चिह्नितपुस्तके द्रविणोदसः इत्यत्र द्राविणोदस इतिपाठः, पुस्तकान्तरे च अध्येत्यत्र अध्येत्विति पाठोऽस्ति।

(५) नवकस्यादिति ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १, ९५, १०। (ख) ऋ॰ १, ९५, ७।

तस्योत्तरं तु [१]सोमानं स्तूयते ब्रह्मणस्पतिः।
ऋग्भिः पञ्चभिराद्याभि[२]स्तिसृभिः सदसस्पतिः ॥६४॥
नराशंसो[क]ऽन्यया चर्चा सोमेन्द्रौ तु निपातितौ।
चतुर्थ्यां सोम इन्द्रश्च पञ्चम्यां दक्षिणा सह[३] ॥६५॥
प्रसङ्गादृषिणा प्रोक्ताः सम्बन्धाः स्थानलोकयोः।
प्राजापत्यं तथेन्द्रः स्यादिति तस्येह नामनी[४] ॥६६॥
कथिते द्वे च षड्चान्यान्येषाम्नायाः[५] प्रजापतिः।
[६]शिष्टानि यानि नामानि तानि वक्ष्याम्यतः परं ॥६७॥
सप्तभिः कश्च कामश्च सदसस्पतिरेव च।
इलस्पति[७]र्वाचस्पतिस्तत[८]स्तु ब्रह्मणस्पतिः ॥६८॥
तृतीयान्ते तु सूक्तस्य चतुर्थ[९] पञ्चमश्च यत्।

---

(१) तस्योत्तरे चेति क॰ घ॰ च॰।
(२) चान्याभिरिति ङ॰।
(३) तथेति क॰ घ॰।
(४) यानि तस्येह नामानि प्राजापत्यानि तानि त्विति ङ॰ पुस्तकान्तरञ्च।
(५) कथितानीह षड्चानि तेषां त्वाद्य इति ङ॰ पुस्तकान्तरञ्च।
(६) शिष्टानीति श्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।
(७) इडस्पतिरिति क॰।
(८) स्तुत इति ख॰ च॰।
(९) प्रथममिति ख॰ ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १, १४२, ३।

चतुर्भिरितरैस्तत्र[१] न सूक्तं नाप्यृगुच्यते[२]॥६९॥
सर्वाण्येव तु सर्वासां देवतानां प्रजापतेः।
नामानि कथयन्त्येते सम्यग्भक्तिदिदृचवः ॥७०॥
तदाऊनैतदेवं स्यादष्टानामेव[३] हि स्तुतः।
तैरेव चास्य कल्प्यन्ते[४] क्रतवश्च हवींषि च ॥७१॥
मरुद्भिर्मध्यमस्थानैः पर[५] मग्निस्तु पार्थिवः।
नवकेनेह[६] सूक्तेन प्रतीत्य[७][क]मिति संस्तुतः॥७२॥
मरुतां साहचर्यात्तु[८] सूक्तेऽस्मिन्नाग्निमारुते।
मन्यते माध्यमस्त्वेव[९] यास्कोऽग्निं न तु पार्थिवम् ॥७३॥
स्यादयं पार्थिवस्त्वेव[१०] तथा रूपं हि दृश्यते।

---

(१) स्वेनमिति क॰ घ॰ च॰।
(२) नापि त्वृचोऽश्नुते इति क॰ घ॰ च॰, नानाप्यृचोऽश्नुते इति ग॰।
(३) एष इति ख॰ ग॰ ङ॰।
(४) तैरेवास्य प्रकल्प्यन्ते इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) स्वयमिति क॰ ग॰ घ॰ च॰।
(६) नवर्चनेहेति ङ॰ पुस्तकान्तरञ्च।
(७) प्रत्यक्षमिति ङ॰।
(८) वेति ङ॰।
(९) मध्यम स्त्वेवमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(१०) पार्थिवस्यैवेति ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ ७, ६८, ६।

भूयसे(क) वीतये(ख) चेति[1] वैद्युतेन तदस्ति हि[2] ॥७४॥
अथ स्याद्[3]भिधानस्य देवतायाः पृथक् पृथक्[4]।
ऋचोऽर्धर्चस्य पादस्य कथञ्जायेत[5] दैवतम् ॥७५॥
यथा निविदि सावित्र्यां स्तूयते कर्म कर्मणा[6]।
दोग्ध्री धेनु(ग)र्वोढानड्वानाशुः सप्तिपुरं धियाः[7] ॥७६॥
यथा वरुणमित्रीया[8] वरुणः प्राविता भुवत्(घ)।
सूक्तप्रायेणैभिरग्ने[9] परोक्ष्यं[10] तत्र देवताः[11] ॥७७॥
शब्दानां द्वैपदादीनां द्विदैवबहुदैवतम्।
असंस्तुतं संस्तुतवत्प्रदिष्टं दैवतं क्वचित् ॥७८॥

---

(१) भूयसे नीतये चैतदिति क॰ ग॰ घ॰।
(२) वैद्युतेनेत्यतस्त्विहेति ख॰ ङ॰।
(३) ध्यतस्त्विदिति ङ॰ पुस्तकान्तरञ्च।
(४) स्तुतौ स्तुताविति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) ध्यायेतेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) सूर्यकर्मणेति ङ॰ पुस्तकान्तरञ्च।
(७) तथैव चेति क॰ ग॰ घ॰।
(८) यथा च प्रश्नो मित्रीया' इति क॰ ग॰ घ॰।
(९) चाग्नेरिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(१०) परोक्ष्यः इति ग॰।
(११) परोक्षस्तत्र संस्तवः इति ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १, १९, २। (ख) ऋ॰ १, ५, ६।
(ग) ऋ॰ २, ३१, ०। (घ) ऋ॰ १, २६, ८।

यत्र द्विदेवते मन्त्र एकवद्देवतोच्यते।
विभक्तस्तुति तद्विद्यात् बहुस्ववहुवच्च तत्[१] ॥७९॥
आशीर्वादेषु संज्ञास्तु कर्मसंस्थास्तु देवताः।
बह्वो हि बहुवद्यत्र[२] द्विवद्वौ यत्र संस्तुतौ[३] ॥८०॥
सुधन्वन[क] आङ्गिरसस्या[ख]सन् पुत्रास्त्रयः पुरा[४]।
ऋभु[ग]र्विभ्वा[घ][५]च वाज[ङ]श्च[६]शिष्यास्ते त्वष्टुरेव च[७] ॥८१॥
शिक्षयामास तांस्त्वष्टा त्वाष्टं यत्कर्म किञ्चन।
परिनिष्ठितकर्माणो विश्वेदेवा उपाह्वयन् ॥८२॥
धेनुं सर्वदुघां चक्रुस्तं सवस्यते।
इन्द्रतस्ततयेऽश्विभ्यां रथं दिव्यं त्रिवन्धुरम् ॥८३॥
इन्द्राय च हरी देवप्रहितेनाग्निनापि यत्।

---

(१) बहुत्वबहुवच्च यद्दिति ङ० पुस्तकान्तरञ्च।
(२) बह्वो हि बहुवाच्यत्र इति ख० ङ० पुस्तकान्तरञ्च।
(३) द्विपदे यत्र संस्तुते इति क० ग० घ० च०।
(४) आसन् सुधन्वन. पुत्रास्त्रय आङ्गिरसस्य ये इति ख० ङ० पुस्तकान्तरञ्च।
(५) विभ्वेति ग० घ०।
(६) वायुश्चेति ख०।
(७) त्वष्टुश्च तेऽभवन्निति ख० ग० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० ५, ४२, ११। (ख) ऋ० ४, ४०, १। (ग) ऋ० १, ११०, ७। (घ) ऋ० १, १११, १। (ङ) ऋ० १, २७, ८।

एकश्च सममित्युक्ते ज्येष्ठो[१] द्वावित्यथाह च ॥८४॥
उक्त्वा ततश्चमसान्यथोक्तं तच्च हर्षिताः ।
त्वष्टा च सविता[२]यैव[३] देवदेवप्रजापतिः ॥८५॥
सर्व्वान् देवान् समामन्त्र्य चामृतत्वं ददुश्च ते ।
तेषामाद्यन्त्ययो[४] नाम्ना दृश्यते बहु वस्तवः[५] ॥८६॥
विश्वेषां ते ततश्चक्रु[६]र्वाहनान्यायुधानि च ।
तृतीयसवने तेषां तैस्तु भागः प्रकल्पितः ॥८७॥
अपिब[क]त्सोममिन्द्रश्च तैस्तत्र सवने[७] [ख]सह ।
तेषां स्तुतिरिन्द्रसूक्तमय[८]मित्यार्भवं[९] परम् ॥८८॥

---

(१) ज्येष्ठेति पुस्तकान्तरं ।
(२) सवितेति ङ० ।
(३) यैवेत्यत्र चैवेतिपाठः समीचीनः ।
(४) चाद्यन्तयोरिति सविसर्गान्तपाठो युक्तः ।
(५) धेनुं सबर्दुघामित्यादि दृश्यते बहुवस्तवः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते । दृश्यते बहुवस्तव इत्यत्र, दृश्यन्ते बहुवस्तवा इति पाठः साधुः ।
(६) ततस्तच्चक्रुस्ते तददिति ङ० पुस्तकान्तरञ्च ।
(७) सवनैरिति ग० ।
(८) त्वयमिति क० ग० घ० च० ।
(९) इत्यष्टकमिति ग०ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, ३२, ३। (ख) ऋ० १, १६, ५।

इहेन्द्राग्नी स्तुतौ देवौ तृतीयस्यादिरश्विनौ[१] ।
हिरण्यपाणिं[२] सावित्री तिस्रश्चाप्यत[३] उत्तराः[४] ॥८९॥
एकाग्नेर्वै तु देवानां[५] द्वादश्यो देवपत्नयः ।
इन्द्राणी वरुणानी च आग्नेयी[६] च[७] पृथक् स्तुताः ॥९०॥
द्यावापृथिव्यौ द्वे च स्यात् स्योना[क]दिस्त्वेव पार्थिवी[ख][८] ।
देवानां वात इत्येषा[९] सूक्तशेषस्तु वैष्णवः ॥९१॥
वायोस्तोचेन्द्रवायुभ्यां त्र्यृचौ द्वाभ्यां[१०] ततः परम् ।
त्र्यृचे[११] मित्रावरुणयोस्तथेन्द्राय मरुत्वते ॥९२॥

---

(१) आदितोऽश्विनाविति ङ० पुस्तकान्तरे च ।
(२) हिरण्यपाणिरिति पाठो युक्तः ।
(३) ऽप्यन्य इति ख०, सावित्र्यत्रचोऽप्यत इति ङ० पुस्तकान्तरे च ।
(४) चतस्रश्चाप्यथोत्तराः इति ग० ।
(५) च देवानामिति ङ० पुस्तकान्तरे च ।
(६) अग्नायीति ख० ङ० पुस्तकान्तरे च ।
(७) वा इति ख० ङ० पुस्तकान्तरे च ।
(८) महीद्यौ स्योनेत्यृक् पार्थिवी स्तुतेति ङ० ।
(९) अतो देवा इति देवीति क० घ० च० ।
(१०) त्र्यृचौ द्वाभ्यामिति क० ग० घ० ङ० पुस्तकान्तरे च, द्वृचस्ताभ्या-
मिति ख० ङ० ।
(११) त्र्यृचः इति ग० ङ० पुस्तकान्तरे च ।

---

(क) ऋ० १,२२,१५। (ख) ऋ० ८,२५,६।

ऋचो[१]-विश्वेषां देवानां पूष्ण आघृणये[क] तृचः[२]।
असक्तो हि घृणिस्तस्य दध्नः पूर्णे दृतौ[ख]रथे[३] ॥९३॥
आघृणिस्त्वयुतः पूषा स गोभिरिभ्यते यतः[४]।
यथा हि मधुनः पूर्णो दृतिर स्तौति चाश्विनौ[५] ॥९४॥
आवर्त्तनिं मधुनेति दृतेरिव च दृश्यते[६]।
अर्धाष्टमा अपां ज्ञेया अर्धर्चान्त्याग्निदेवता[७] ॥९५॥
कस्य नूनन्तु काण्वाद्या आग्नेय्यृक् सवितुस्तृचः।
भगभक्तस्य[ग] भागो वा परं यदिति[८] वारुणम्[९] ॥९६॥
वषिष्वाहेति चाग्नेये त्वगग्नेर्मध्यमस्य तु।

---

(१) तृच इति ग॰ घ॰ ङ॰ च॰।
(२) आघृणयेति चेति ख॰, आघृणिरित्यृचः इति ग॰, तत्राघृणयेति चेति ङ॰।
(३) दतः रथे इति ङ॰ पुस्तकान्तरञ्च।
(४) गोभिर्भोरिभ्यते ततः इति ख॰।
(५) दितिमर्थोति चाश्विनाविति ख॰, चाश्विनौ इति ङ॰।
(६) असक्तो हि घृणिस्तस्येत्यादि दृतिरेव च दृश्यते इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।
(७) अध्यर्द्धान्त्याग्निदेवतेति ख॰ ङ॰, अप्यर्द्धान्त्याग्निदेवतेति ग॰।
(८) हि यचेति ग॰।
(९) यच्चिद्धि वारुणे इति ङ॰।

---

(क) ऋ॰ १, २३, १४। (ख) ऋ॰ ४, ४५, १। (ग) ऋ॰ १, २४, ५।

जराबोधे[क]ति विज्ञेया वैश्वदेव्युत्तमोत्तमा[1] ॥९७॥
पराश्वतस्रो यास्त्वैन्द्रे चेन्द्रोलूखलयोः स्तुतिः[2] ।
मन्येते[3] यास्ककार्थक्या[4]विन्द्रस्येति तु भागुरिः ॥९८॥
यच्चिद्धुलूखलस्य द्वे द्वे परे मुसलस्य तु।
चर्माधिषवणीयं[5] वा सोमं वान्त्या प्रशंसति ॥९९॥
ऐन्द्रं यच्चिद्धि सत्येत्युत्तरश्चाश्विनात्तृचात्[6] ।
आश्विनादुत्तरस्त्वन्त्य उषस्य[7] स्तृच उत्तमः ॥१००॥
स्तूयमानः प्रश्वदिति प्रीतस्तु मनसा ददौ ।
शुनःशेपाय[ख] दिव्यन्तु रथं सर्वं हिरण्मयम् ॥१०१॥
आग्नेयं सूक्त[8]मैन्द्रे च[9] चिच्चिदित्याश्विनं ततः ।
स्तुतेऽर्थवादं कर्मैतदिन्द्रस्येति तु शंसति ॥१०२॥
पादोऽग्नये क्रयामीति मैत्रावरुण उत्तरः ।

(१) वैश्वदव्युत्तमानमः इति क० ग० घ० च० ।
(२) यत्रेति मुसलोलूखलस्तुतिरिति ङ० पुस्तकान्तरञ्च।
(३) मन्येतामिति ख० ङ० पुस्तकान्तरञ्च ।
(४) यास्ककाच्छक्याविति ङ० पुस्तकान्तरञ्च ।
(५) चर्म्माधिषवणीये इति ङ० ।
(६) आश्विनं तृचमिति ङ० ।
(७) आश्विनेत्युत्तरं कस्त कौमस्य इति ङ० पुस्तकान्तरञ्च। कस्त इत्यत्र कश्चिति ख० ।
(८) यत्नमिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(९) द्वे इति ङ० ।

(क) ऋ० १, २७, १०। (ख) ऋ० १, २४, १२।

तृतीयो रात्रिसंस्तावः[१] सूक्तं सावित्रमुच्यते ॥१०३॥
पञ्चेमानि जगौ दृष्ट्वा[२] सूक्तान्याङ्गिरसो मुनिः।
हिरण्यस्तूपतां प्राप्य[३] सख्यं चेन्द्रेण शाश्वतम् ॥१०४॥
आग्नेयं प्रेति मारुतं क्रीळं[४] (क)त्रीणि पराण्यतः।
सूक्तमुद्[५]ब्राह्मणस्त्वं यं रचन्ति त्रयस्तृचाः ॥१०५॥
वरुणार्य्यममित्राणां मध्य आदित्यदैवतः।
पौष्णं सपूषन्[६] षड्रौद्र[७]स्तृतीया न तु केवला ॥१०६॥
मित्रेण वरुणेनाच[८] विश्वैर्देवैश्च संस्तवः।
उक्तमत्रर्षिणा पूर्व्वमादेशाद्दैवतं विना ॥१०७॥
ज्ञातुं न शक्यते लिङ्गात्तथापि कश्चिदुच्यते।
आदित्या वसवो रुद्रास्त्वमग्न इति च स्तुताः ॥१०८॥
तृचः सौम्योऽग्न[९] आग्नेये प्रगाथेनाश्विनौ स्तुतौ।

(१) रात्रिः स्तुता तृतीयेनेति ङ०।
(२) दृष्ट्वेति ख० ग० ङ० पुस्तकान्तरञ्च।
(३) प्राप्तः इति ङ०।
(४) क्रौलमिति पुस्तकान्तरं।
(५) उक्तिरेवेति ख० ङ० पुस्तकान्तरञ्च।
(६) सम्पुष्यन्निति पाठो विशुद्धः।
(७) पौष्यं संदग्ररौद्रकेति ङ० पुस्तकान्तरञ्च।
(८) वरुणेनाश्चेति ख० ङ० पुस्तकान्तरञ्च।
(९) सौम्यम इति पुस्तकान्तरं।

(क) ऋ० १, २७, १।

सद्दोषसा लिङ्गभाजा वयं सोमः सुदानवः[१] ॥१०८॥
अर्धर्चौ देवदेवत्य एष इत्याश्विने परे।
आदित्यं मन्यते यास्को हविषेति[२] सहस्तुतं[३] ॥११०॥
सद्दोषसे ततः सौर्य्यमुदुत्यमिति संस्तुतम्।
भक्तिर्येन वरुणेद्रु रोगघ्नस्तृच उत्तमः ॥१११॥
रोगोपनुद[४]मायाभ्यामुदघन्नित्युत्तमे द्वचे।
अर्धर्चे तु द्विषद्वेष ऐन्द्रः सव्यः[५] (क)शतर्चिषु ॥११२॥
स्वयमिन्द्रसमं पुत्रमिच्छन्तोऽङ्गिरसो मुनेः।
वज्रेव[६] सव्यो भूलर्षि[७] र्योगिलात्पुत्रताङ्गतः ॥११३॥
प्रथमे मण्डले ज्ञेया ऋषयस्तु शतर्चिनः।
क्षुद्रसूक्तमहासूक्ता अन्त्ये मध्येषु मध्यमाः[८] ॥११४॥

---

(१) उक्तमन्त्रर्षिणोत्यादि वयं सोमः सुदानवः इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।
(२) हविषेति पुस्तकान्तरं।
(३) आदित्यमित्यादि श्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते।
(४) रोगापनुद्धोति ग॰, रोगापनुतिविति ङ॰।
(५) अन्नर्चन्तु द्विषद्वेषदैन्द्राण्यश्चेति ङ॰।
(६) वज्रे चेति ख॰।
(७) भूलर्षेरिति क॰ ग॰ घ॰ च॰।
(८) प्रथमे मण्डले ज्ञेयेत्यादि अन्त्ये मध्येषु मध्यमा इत्यन्तपाठः क॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ॰ १, ८२, ५।

नवकं जातवेदस्यं नूचिदित्तु वया इति ।
वैश्वानरीयं तत्सूक्तमाग्नेयन्तु ततः परम्[१] ॥११५॥
ऐन्द्राण्यस्मै तत[२]स्त्रीणि तृष्णे अर्धाय[क] मारुतम् ।
आग्नेयानि तु पश्वे[ख]ति नवमश्वद्धि वामिति[३] ॥११६॥
[४]दशाश्विनानीमानीति इन्द्रावरुणयोः स्तुतिः ।
सौपर्णेयास्तु काश्चिच्च[५] निपात[६]स्तुतिषु स्तुताः ॥११७॥
उपप्रयन्तः[ग] सूक्तानि आग्नेयान्युत्तराणि षट् ।
हिरण्यकेशो[घ] रजसस्तृचोऽग्नेर्मध्यमस्य तु ॥११८॥
इत्येति[७] पञ्च त्वैन्द्राणि[८] यामित्यस्यां निपातिताः ।

---

(१) वह्निमाग्नेयमुत्तरमिति ख० ङ० पुस्तकान्तरञ्च ।

(२) इन्द्रः इति ङ० ।

(३) नवषड्द्वैपदानि त्विति ङ० पुस्तकान्तरञ्च ।

(४) ङ० चिह्नितपुस्तके पुस्तकान्तरे च, दशाश्विनानीति श्लोकार्द्धस्थाने, उपान्त्यं सप्तमेऽर्द्धर्चं न मैत्रावरुणं विदुरिति पाठोऽस्ति ।

(५) याः काश्चिदिति ग० ङ० पुस्तकान्तरञ्च ।

(६) निपाताः इति ङ० पुस्तकान्तरञ्च ।

(७) इच्छेतीति ख० ङ० पुस्तकान्तरञ्च ।

(८) चैन्द्राणीति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० १, २७, ४ । (ख) ऋ० १, ९५, १ । (ग) ऋ० १, ७४, १ ।
(घ) ऋ० १, ७९, १ ।

12

दध्य(क)ङ्गनुरथर्वा च मारुतानि प्रये ततः ॥११९॥
चत्वार्य्यानो(ख) वैश्वदेवे द्वे देवानां स्तुतिर्मता(१)।
आनोभद्राश्च देवानां भद्रं यावच्छतं पुनः ॥१२०॥
मधुवातास्तृचे तस्मिन् परमं मध्वपीय्यते।
ग्रान्ध्यर्षा प्रत्न इत्येषां वैश्वदेवी च्छगिय्यते(२) ॥१२१॥
(३)अदितिर्द्यौरिति त्वस्यां विभूतिः कथिता(४)दितेः।
त्वं सोमसौम्यमौषस्य(५) मेता उत्यास्तृचोऽश्विनोः ॥१२२॥
अग्निनाग्नेय(६) सोमस्य अग्नीषोमाविति स्तुतिः(७)।

---

(१) चत्वार्य्यान इति सूक्ते देवानां स्तुतिरुत्तरेति क० ख० घ० च०, चत्वार्य्यानो इत्यत्र चत्वार्य्यामाविति ख०।
(२) आनो भद्राश्च देवानामित्यादि वैश्वदेवी च्छगिय्यते इत्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(३) पुस्तकान्तरे, अदितिर्द्यौरिति श्लोकार्द्धं, आनो भद्राश्चेति श्लोकार्द्धात् परं पठितं।
(४) कथ्यते इति ख० ग० पुस्तकान्तरेषु।
(५) मेधस्यमिति ख०, मेधस्यमिति क० घ० च०।
(६) अग्निनाग्ने· यस्येति क० घ० च०।
(७) विमं स्तुमे इति ग० पुस्तकान्तरेषु।

---

(क) ऋ० १, ८०, १६। (ख) ऋ० १०, ५५, ५।

गोतमादीर्घजः(क) कुत्सपरुच्छेपादृषेः(१) परः ॥१२३॥
इमं कुत्स(ख) आङ्गिरसो ददर्शजातवेदसं जगाद षोड़शर्चं।
पूर्वी देवा इत्यृचो देवदेवास्त्रयः पादा उत्तमायास्ततोऽर्द्धम् ॥१२४॥
तस्यैव वा यस्य तत्पूर्वमुक्तं मित्रादिभ्यो वात्र(२) षड्भ्यः प्रकृताभ्यः।
अन्त्योऽर्धर्चः षण्णां स्तुतानां पूर्वी देवाः पादैः स्तुतिभिः स्तुताः(३) ॥१२५॥
भरद्वाजे·ग्रत्समदे वसिष्ठे नोधस(ग) गल्ये विमदे नभाके(घ)।
कुत्सेनोदर्के(४) बहुदेवतेषु तथा द्विदेवेषु समानदेवधर्माः(५) ॥१२६॥

---

(१) गोतमो नाम य ऋषिः कुत्स आङ्गिरस इति क० घ० च०।

(२) वाचेत्यत्र स्तुताप्रा इति क० घ०, स्तुताप्रो इति च०।

(३) ङ० चिह्नितपुस्तके पुस्तकान्तरे च,—

इमं कुत्स आङ्गिरसो ददर्श जातवेदसम्।
कुत्सादीर्घतमास्येत्यमध्ये ताटस्थ्यधीयते ॥
पूर्व्वा देवास्ततो देवास्त्रिभिः पादैस्तु संस्तुताः।
षोडशर्चं तथा सूक्तं जगाद चतुरित्यसौ।
अन्त्येऽर्द्धर्चे तु वा यस्या लिङ्गोक्ताना स्तुतौ गया ॥

इति पाठो वर्त्तते।

क० घ० च० चिह्नितपुस्तकेषु, कुत्सादीर्घतमास्येतीति श्लोकार्द्धस्थले कुत्सादीर्घतमा इति ते द्वे एवमधीयते। इति पाठोऽस्ति। इतीयच ग्रस्यदिति ग०।

(४) कुत्सेनोदर्केति क० घ० च०।

(५) समानधर्म्मिणः इति ख० ग० ङ० पुस्तकान्तरच।

---

(क) ऋ० १, ९८, १। (ख) ऋ० १, १०६, ६। (ग) ऋ० २, ६१, १४। (घ) ऋ० ८, ४०, ४।

इमा रौद्रं ततः[१] सौर्यं चित्रं पश्चाश्विनान्यतः ॥१३८॥
नासत्याभ्यामिति त्वन्ये अर्धर्गं दुःस्वप्ननाशिनी[२]।
ऐन्द्रव[३]द्वैश्वदेवश्च प्रोषसे पृथुरुत्तरे ॥१३९॥
यूपिर्दानश्च[४] भाव्यस्य[क] प्रातरित्यत्र शंसति।
कक्षीवता[ख] विद्रित्वेति[५] यदैन्द्रमुपदिश्यते ॥१४०॥
परोक्षं वैश्वदेवं[६] तत् प्रदिष्टं स्वरसामसु।
अधिगम्य गुरोर्विद्यां गच्छन् स्वनिलयं प्रति ॥१४१॥
कक्षीवानध्वनि श्रान्तः सुष्वापारण्यगोचरः।
तं राजा स्वनयो नाम भावयव्यसुतो[७]व्रजन् ॥१४२॥
क्रीडार्थं सानुगोऽपश्यत् सभार्यः सपुरोहितः।
अथैनं रूपसम्पन्नं दृष्ट्वा देवसुतोपमम् ॥१४३॥
कन्यादाने मतिं चक्रे वर्णगोत्राविरोधतः।
सम्बोध्यैनं स पप्रच्छ वर्णगोत्रादिकं तदा ॥१४४॥
राजन्नाङ्गिरसोऽस्मीति कुमारः प्रत्युवाच तम्।

(१) परमिति क॰ ख॰ च॰।
(२) त्वन्येन्त्या दुःस्वप्ननाशिनीति क॰ ग॰ घ॰ च॰।
(३) ऐन्द्रकदिति ङ॰, ऐन्द्रं वेति च॰।
(४) त्विति ख॰।
(५) कक्षीऽतं कदित्यातीति क॰ ग॰ घ॰ च॰।
(६) परोक्षे वैश्वदेवे इति ङ॰।
(७) भावयव्यसुत इति ङ॰।

(क) ऋ॰ २, १२६, १। (ख) ऋ॰ १, ११७, ६।

पुत्त्रोऽहं दीर्घतमस औचथस्य[क] ऋषेर्नृप[१] ॥१४५॥
अथास्मै स ददौ कन्याः[२] दिव्याभरणभूषिताः[३] ।
तावतश्च रथानश्वान् वोढ्ढ्नान् वै[४] चतुर्युजः ॥१४६॥
वधूनां वाहनार्थाय धनकूप्य[५]मजाविकम् ॥
निष्काणां वृषभाणाञ्च[६] शतं शतमदात्पुनः ॥१४७॥
गवां सहस्रं षष्टीश्च सर्वाः खल्वरिधायसः[७][ख] ।
शतमश्वान्कृतं निष्कानथान् दशवधूमतः ॥१४८॥
चतुर्युजो गवाश्चैव सहस्रं षष्ट्यधिकम्[८] ।
स्वनयाद्भावयव्याद्यः कचीवान् प्रत्यपद्यत ॥१४९॥
प्रतिगृह्य च तुष्टाव प्रातः[९] पित्रे शशंस च ॥
एतदुत्तरसूक्तेन शतमित्यादिनोदितम्[१०] ॥१५०॥

---

(१) राजन्नाङ्गीरसोऽस्मीत्यादि औचथस्य ऋषेर्नृपेत्यन्तपाठ ङ॰ चिह्नितपुस्तके न दृश्यते ।
(२) कन्या इति ङ॰ ।
(३) दशभारसमन्विता इति ङ॰ ।
(४) रथाश्चास्य दीपिनोऽश्वैरिति ङ॰ ।
(५) धर्मं कूप्यमिति ङ॰ ।
(६) निष्काणां शतमश्वानामिति ङ॰ ।
(७) गवा सहस्रमिति श्लोकार्द्धं ङ॰ चिह्नितपुस्तके न विद्यते ।
(८) षष्ट्युपाधिकमिति ङ॰ ।
(९) तत· इति ङ॰ ।
(१०) ङ॰ चिह्नितपुस्तके, एतदुत्तरसूक्तेनेति श्लोकार्द्धस्थले, एतत्तदुत्तरे सूक्ते शतमित्यादि घोष्यते इति पाठोऽस्ति, शतमश्वं स्कन्नं निष्कानिति श्लोकार्द्धात्प्राक् पठितश्च ।

---

(क) ऋ॰ १, १५८, १ । (ख) ऋ॰ १, १२६, ५ ।

फलप्रदर्शनं तस्य क्रियते प्रायशस्त्विह।
द्वितीयान्तु पितापश्चात्सुगु[क]रित्यादिकामृचम् ॥१५१॥
कक्षीवतं[१] सर्व्वमिति भगवानाह शौनकः।
एषा तु दैर्घतमसी सानुलिङ्गा कथं भवेत् ॥१५२॥
उच्यते मातरि[ख]सूक्ते सूनोर्दानेन हर्षितः।
राजश्चाशिषमाहाथ सुगुरित्यादिना किल[२] ॥१५३॥
कर्माणि याभिः कथितानि राज्ञां[३]
दानानि चोच्चावचमध्यमानि।
नाराशंसी[ग]रित्यूचस्ताः प्रतीया-
याभिः स्तुतिर्दातृतयोषु राज्ञां[४] ॥१५४॥
पद्मामन्दान् भावयव्यस्य गीता
जायापत्योर्द्वौ ऋचौ सम्प्रवादः[५]।

---

(१) काक्षीवतमिति पाठः समीचीनः।
(२) अधिगम्य गुरोर्विद्यामित्यादि सुगुरित्यादिना किलेत्यन्तपाठः क॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते। फलप्रदर्शनं तस्येत्यादि सुगुरित्यादिना किलेत्यन्तपाठोऽपि ख॰ ङ॰ चिह्नितपुस्तकयोर्न दृश्यते।
(३) कर्माणि यावन्ति कृतानि राज्ञेति ङ॰।
(४) प्रतीयात् स्तुवी दृष्टा यासु वरिष्ठराज्ञामिति ङ॰ पुस्तकान्तरञ्च।
(५) सम्वादो द्वचेनेति क॰ घ॰ च॰।

---

(क) ऋ॰ १, १२५, २। (ख) ऋ॰ १, १, ४। (ग) १०, ८५, ६।

# BIBLIOTHECA INDICA,

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No 760



# वृहद्देवता ।

# BRIHADDEVATA

## AN INDEX TO THE GODS OF THE RIG VEDA

BY

SAUNAKA ACHARYA

EDITED BY

RAJENDRALALA MITRA C I E LL D

FASCICULUS II

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS

AND PUBLISHED BY THE

ASIATIC SOCIETY 57 PARK STREET

1890

सम्बवादं रोमशये[क]न्द्रराज्ञो-
रेते त्यृचौ[१]मन्यते शाकपूणिः ॥१५५॥
इन्द्रेण जायापत्योरितिहासं
[२]त्यृचेऽस्मिन्मन्यते शाकटायनः।
प्रादात्सुतां[३] रोमशां नाम नाम्ना
बृहस्पतिर्भावयव्याय राज्ञे ॥१५६॥

इति बृहद्देवतायां तृतीयोऽध्यायः॥

---

(१) सम्बवादमस्यस्या षच चैव ताभ्यामेते त्यृचौ इति ख॰ ए॰ पुस्तकान्तरस्थ॰।
(२) त्यृचे इति ग॰।
(३) स तामिति ख॰ ङ॰।

---

क) ऋ॰ १, १२६, ७।

# अथ चतुर्थोऽध्यायः।

ततस्त्[1]मथं हरिवान्[क]विदित्वा
प्रियं सखायं स्वनयं दिदृक्षुः।
अभ्याजगामाशु शचीसहायः
प्रीत्यार्चयत्तं[2] विधिनैव[3]राजा॥ १॥
अभ्याजगामाङ्गिरसी च तत्र
दृष्ट्वा[4]तयोः सा चरणौ च वन्दे।
इन्द्रः सखिलादथ तामुवाच
रोमाणि ते सन्ति न सन्ति रात्रि॥२॥
सा बालभावादथ तं जगाद
उपोपमे शक्र परामृशेति।
तां पूर्वयर्चाय नृपः प्रहर्षा-
दभ्यभ्रजत्सोऽथ पतिं तु साऽब्रवीत्[5]॥३॥

---

(१) तत्सर्वमिति ख॰ ड॰ पुस्तकान्तरञ्च।
(२) प्रत्यर्चितं तमिति ख॰।
(३) प्रत्यर्चितोऽसौ विधिना चेति ख॰ पुस्तकान्तरञ्च।
(४) दृष्ट्वेति ख॰ ड॰ पुस्तकान्तरञ्च।
(५) तां पूर्वया सान्त्वनृपः प्रहृष्टोवाच प्रजत्वाय पतिं पतिव्रतेति क॰ ख॰ ग॰।

---

(क) ऋ॰ १, ८२, ४।

अथाग्नेये अग्निमित्युत्तरे य-
त्पञ्चैन्द्राणि प्रत[क]दैन्द्व्यृगच[१]।
युवन्त[ख]मिन्द्रापर्वतौ[ग] सह स्तुता-
विन्द्रन्तु मेने यास्क एकं प्रधानं[२] ॥४॥

स्त्वयेतर्चुः पर्वतो विद्धि वज्रो[३]
द्विवत्स्तुतौ चेन्द्रमाहु[४] प्रधानं।
आत्वावैयोरथ पञ्चेन्द्रवाय्वो[५]रेका
वायोरुत्तरं द्विप्रधानं ॥५॥

तत्र पञ्चवरुणं मित्रदेवा
द्विवादिभ्यः[६] कथिताभ्यः परे द्वे
द्वे द्वे पदे संस्तुते[७] रोदसी च
देवाश्चार्धर्चेन विभक्तमन्यत् ॥६॥

---

(१) अग्निमाग्नेये अत उत्तराणि पञ्चेन्द्राणि प्रतदैन्द्व्यृगेकेति ख० पुस्तकान्तरञ्च।

(२) त्विन्द्रन्तु मेन इह यास्कः प्रधानमिति क० ग० घ०।

(३) अत्युस्तुतः पर्वतद्धि यज्ञः इति क० ग० घ०।

(४) चन्द्रमाङ्गरिति क० ग० घ०।

(५) आत्वानवपञ्चेन्द्रवाय्वोरिति क० ग० च०, आत्वावायोस्वाय पञ्चेन्द्र-वाय्वोरिति ग०।

(६) दिभ्य आद्याः इति ङ०।

(७) द्वे वापरे संस्तुताविति ङ०।

---

(क) ऋ० ८, १२, २७। (ख) ऋ० ८, ७१, ४। (ग) ऋ० ३, ५३, १।

मैत्रावरुणं सुसुमे(क)ति सूक्तं(१)
प्रप्र(ख)पोष्णं वैश्वदेवं द्वितीयं(२)।
एतत्सूक्तं(३) वैश्वदेवं तृतीयं
वैश्वदेवं स्या(४)द्बहुदेवतेषु ॥७॥
बहुप्रस्तु वैश्वदेवेषु संस्तवः(५)
अर्धर्चा(६) द्वैपदास्त्रैपदाश्च।
द्विप्रधाना अपि चैकप्रधाना
बहुप्रधाना अपि वैश्वदेवाः(७) ॥८॥
वैश्वदेवी मित्रावरुणौ द्वितीया
तिस्रोऽश्विभ्यां तत ऐन्द्री ततोऽग्नेः।
मारुत्येका तत ऐन्द्राग्न्यनन्तरा
बार्हस्पत्या चोत्तमा स्तौति देवान् ॥९॥

(१) सुसुमेतीह सूक्तमिति ख०, ग० ङ० पुस्तकान्तरञ्च।
(२) तृतीयमिति क० ग० घ०।
(३) अस्तु चौमदिति ङ०।
(४) वैश्वदेवं हि स्यादिति ङ०।
(५) सम्भूयः इति क० ग० घ०।
(६) अर्धर्चाविति क० ग० घ०।
(७) अपि ता वैश्वदेव्यः इति ङ० पुस्तकान्तरञ्च।

(क) ऋ० १, १३७, ८। (ख) ऋ० १, ४०, ७।

ऋषीनृषिर्वा स्तौति दध्यङ्मेऽस्या-
मात्मानं वा तेषु यं सत्त्वजन्म[१]।
तस्मादस्यां विप्रवदन्ति केचित्
इन्द्राग्नी तस्यां तु[२] निपातभाजौ ॥१०॥

द्वावुचथ्य[क]बृहस्पती ऋषिपुत्रौ बभूवतुः।
आसीदुचथ्यभार्या तु ममता नाम भार्गवी ॥११॥
तां यवीयान्[३] बृहस्पतिर्मैथुनायोपचक्रमे।
शुक्रस्योत्सर्गकाले तु गर्भस्तं प्रत्यषेधत[४] ॥१२॥
इहास्मिन् पूर्वसम्भूतो न कार्यः शुक्रसङ्करः।
तच्छुक्रप्रतिषेधं तु न ममर्ष बृहस्पतिः[५] ॥१३॥
स व्याजहार तं गर्भं तमस्ते दीर्घमस्त्विति।
स च दीर्घतमा नाम बभूवर्षिरुचथ्यजः ॥१४॥
स जातोऽव्यतप[६]ल्लोकानेतस्मा[७]दन्धतां गतः।

---

(१) एवाथर्व्याणः स्तौति यशंस जन्मेति क० घ० च०। एवाथर्व्याण इत्यत्र ऋहमेवाथर्व्याणः इति ग०।
(२) केचिदैन्द्री त्वेवेति क० घ० च०।
(३) कनीयानिति क० घ० च०।
(४) प्रत्यभाषतेति क० ग० घ० च०।
(५) तं शुक्रप्रतिष्ठानं तु बृहस्पतिरमर्षयदिति ङ०।
(६) अभ्यतपदिति ख० घ०, अभ्यवददिति ग० ङ० पुस्तकान्तरञ्च।
(७) अकस्मादिति ख० ग० ङ०।

---

(क) ऋ० ८, ४६, २८।

ददर्शवा सुता नेचे ततोऽनन्यो बभूव च[1] ॥१५॥
स वेदिषद् इत्यस्तौ[2]चतुर्भिर्जातवेदसं।
समिद्ध आप्रियोऽन्त्यैन्द्री तमित्यग्नेः पराणि षट्[3] ॥१६॥
स्तुतौ तु मित्रावरुणौ सूक्तैर्मित्रमिति त्रिभिः।
मित्रं मैत्री वदत्येता[4] माधेनवस्य शंसति ॥१७॥
अदितिं वाथ वाप्यग्निं तथा रूपं हि दृश्यते।
अग्निं मेने दितिं त्वेव कुत्से चेह[5] च शौनकः ॥१८॥
ऋषिरत्र प्रथक्त्वाद्वा दर्शनादानुकीर्तयेत्[6]।
विष्णोर्नुकमिति त्रीणि वैष्णवानि पराण्यतः ॥१९॥
प्रवः पान्तं चतुर्भिस्तु[7] इन्द्राविष्णू सह स्तुतौ।
रुद्राणि वा वैष्णवानि ऋषिस्त्वेत्यृचि[8] कांक्षति ॥२०॥

---

(१) तु तस्याद्यौ नैते न त्वन्यतां गत इति क० ख० घ०।

(२) इत्याद्यैरिति ङ०।

(३) आप्रः परैन्द्री षड्भिः त्वग्निं तमित्यत इति क० ख० घ०, त्वाप्रि-योन्त्यैन्द्री प्राप्त्वाग्नेः पराणि चेति ग०।

(४) मैत्रीव देवतामिति ङ०।

(५) यास्कः कुत्सो वेहेति ङ० पुस्तकान्तरञ्च।

(६) ऋषिरग्नेः प्रथक्त्वादृष्ट्वाभौनन्त्वकीर्त्तयदिति ङ०।

(७) प्रवयतस्त्वभिर्ऋग्भिरिति ग०, तावा यतस्त्वभिर्ऋग्भिरिति ङ० पुस्तकान्तरञ्च।

(८) तावामित्यृचीति ग० ङ० पुस्तकान्तरञ्च।

जीर्णन्तु दीर्घतमसं खिन्नास्तत्परिचारिणः(१)।
दासा अथ(२) नदीतोये दृष्टिहीनमुपादधुः(३) ॥२१॥
तत्रैकस्त्रैतनो(४)(क) नाम शस्त्रेणैनमपाहनत्।
शिरस्त्वंसावुरश्चैव स्वयमेव न्यकृन्तत(५) ॥२२॥
अङ्गदेशसमीपे तु नद्यः सर्वाः समुत्खिदन्(६)।
(७)जनयामास चोत्थाय(८) कक्षीवत्प्रमुखानृषीन् ॥२३॥

(१) तत्परिचारकाः इति ख० ङ० पुस्तकान्तरयोः।
(२) दासा बध्वेति क० घ० च०।
(३) प्रवादधुरिति क० घ० च०।
(४) चैनतः इति क० घ० च०।
(५) ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—
हत्वा दीर्घतमास्तं तु पापेन महता हतम्।
आत्माङ्गान्यनुदचैव ततोऽदान्मोचितो भ्रमम् ॥
इत्यधिकं पठितम्।
(६) तं नृपं समुदक्षिपदिति ङ० पुस्तकान्तरयोः।
(७) जनयामास चोत्थायेति श्लोकार्द्धात्प्राक्, ख० ङ० पुस्तकयोः पुस्तकान्तरे च,—
अङ्गराजगृहे युक्ता सुदेष्णं पुत्रकाम्यया।
राज्ञा च प्रहितां दासीं भक्तां मत्वा महातपाः ॥
इत्यधिकं पठितम्।
(८) सोऽजीजनद्दृश्यसेकादिति ख० ङ० पुस्तकान्तरयोः।

(क) ऋ० १,।१५८, ५।

तुष्टाव चैव सूक्ताभ्या[१]मबोधीत्यश्विनादृषिः ।
प्रेति द्यावापृथिव्यौ तु[२] पराभ्यामेतदुत्तरं ॥२४॥
किमाभेवं परं[३] मानो मेधस्याश्वस्य संस्तवः ।
ईर्मां[क]ता स इति लक्ष्यां नीयमानं प्रशंसति ॥२५॥
स्वयूथ्यास्तस्य चैवात्र बहवः संस्तुता हयाः ।
नियुक्ताश्चानियुक्ताश्च प्रसङ्गादनुकीर्त्तिताः ॥२६॥
संज्ञप्तवदसंज्ञप्तं हविष्यं[ख] चाह सूनवः[४] ।
तस्मिन्मांसस्य सूनस्य चतुर्णां हविषस्तथा[५] ॥२७॥
वासोऽधिवाससोश्चात्र स्वधिते[ग]श्च प्रकीर्त्तनं[६] ।
गात्रशूलस्थूणाना[घ]ञ्च[७] स्वधितेश्च प्रकीर्त्तनं[८] ॥२८॥

---

(१) वेति वसुताभ्यामिति ङ॰ पुस्तकान्तरञ्च।

(२) द्यावापृथिव्यातेति ग॰ पुस्तकायञ्च।

(३) परे इति ङ॰ पुस्तकान्तरञ्च।

(४) भविष्यं चाह भूतवत् इति ख॰ ङ॰ पुस्तकान्तरञ्च।

(५) चतुर्थो हविषस्तथेति ग॰, तत्पौनस्त्यं च मांसस्य चतुर्थ्यां च विषान्तथेति ङ॰ पुस्तकान्तरञ्च।

(६) धहिषस्यञ्च कीर्त्तितमिति ख॰ ग॰, वासाधिवाससोश्चात्र यज्ञीयस्य च कीर्त्तनमिति ङ॰।

(७) गात्रशूलस्थूणायाश्चेति ख॰ ङ॰।

(८) क॰ घ॰ च॰ चिह्नितपुस्तकेषु, गात्रशूलस्थूणायाश्चेतिश्लोकार्द्धं न पठितम्।

---

(क) ऋ॰ ४, २७, २। (ख) ऋ॰ १, १६२, ४। (ग) ऋ॰ १, १६२, १८। (घ) ऋ॰ ५, ६२, ७।

भागस्य[१] कीर्त्तनं चात्र इन्द्रापूष्णोः सह स्तुतिः[२] ।
सूक्तं यदस्य[३] वामीयं वैश्वदेवं तदुच्यते ॥२९॥
प्रवादा विविधास्तत्र देवानां चात्र कीर्त्तनं ।
अग्निस्तु वामः पलितो[क] वायुर्भ्राता तु मध्यमः ॥३०॥
*इतस्तृत*[ख]*तृतीयोऽत्र*[४] *सप्त वै रश्मयस्तु ताः ।*
परास्तु कथयन्त्यग्निं[५] यथा वर्षति पाति[६] च ॥३१॥
अहोरात्रदिना[७]न्मासानृतूंश्च परिवर्त्तनं[८] ।
पञ्चधा त्रिविधा[९] चैव षोढा द्वादशधैव च[१०] ॥३२॥
संवत्सरं चक्रवच्च पराभिः कीर्त्तयन्नृषिः ।

---

(१) छागस्येति ग॰ ङ॰

(२) इन्द्रापूष्णोश्च कीर्त्तनमिति ख॰ ङ॰ ।

(३) यदस्येति ङ॰ ।

(४) तृतीयोक्त॰ इति ङ॰ ।

(५) चाग्निरिति ङ॰ ।

(६) वातीति ख॰ ङ॰ ।

(७) अहोरात्रान् दिनानिति ङ॰ ।

(८) पश्चाच्च परिकीर्त्तनमिति ङ॰ ।

(९) पञ्चधा च त्रिधेति ख॰ ङ॰ ।

(१०) द्वादशधापि वेति ङ॰ ।

---

(क) ऋ॰ १, १४४, ४ । (ख) ऋ॰ १, १६४, १ ।

क्षेत्रज्ञानं(१) च धेनुञ्च गौरीं वाचं सरस्वतीं ॥२३॥
धर्मं पूर्व्वयुगीयञ्च(२) साध्यान् देवगणांस्तथा।
विविधानि च कर्म्माणि त्वग्निवायुविवस्वताम् ॥२४॥
विभूतिमग्नेर्वायोश्च जगती स्थान(३)जङ्गमे।
हरणं रश्मिभिश्चैव(४) विसर्गं(५) पुनरेव च ॥२५॥
कर्म्मानुकीर्त्तनञ्चाथ(६) पर्जन्याग्निविवस्वतां।
मातापुत्रौ तु वाक्प्राणौ माता वागितरः सुतः ॥२६॥
सरस्वन्तमिति प्राणा(७) वाचं प्राहुः सरस्वतीं।
शरीरमिन्द्रियैर्युक्तं क्षेत्रमित्यभिधीयते ॥२७॥
वेद तत्प्राण(८) एवैकस्तस्मात् क्षेत्रज्ञ उच्यते।
मेघः(९) शक(क) स्तस्य धूमः(१०) सलिलं वास एव वा ॥२८॥

---

(१) क्षेत्रज्ञानमिति ग॰, क्षेत्रं ज्ञानमिति ङ॰।
(२) पूर्व्वयुगानाञ्चेति ख॰ ङ॰, धर्म्मपूर्व्वयुगौ पश्चेति ग॰,
(३) जगति स्थास्त्विति ख॰ ङ॰।
(४) वारः इति ख॰, वारामिति ङ॰।
(५) विसर्पमिति ख॰।
(६) चास्येति ख॰ ङ॰ पुस्तकान्तरञ्च।
(७) प्राणः इति क॰ ग॰ घ॰ च॰।
(८) वेत्त्येतत्प्राण इति ङ॰।
(९) मेघे इति ख॰।
(१०) धूमे इति ख॰।

---

(क) ऋ॰ ८, ८०, ३।

सोम उत्ता[क]भवन्त्यस्य पावकास्य त्रयोऽधिपाः।
गौरीरं तं वैश्वदेवमुपरि स्यात्पृथक् स्तुतिः ॥३९॥
इन्द्रं मित्रमिमौ मौर्य्यौ सौरी चान्या सरस्वते[१]।
मारुतेन्द्रस्तु संवादः कयेति[२] परमः सतः[३] ॥४०॥
मरुतामयुज[४]स्त्वैन्द्रो युग्माः सर्व्वाः[५] सहान्यया।
एकादशी प्रथमा च मारुतस्तृच उत्तमः[६] ॥४१॥
ऋचस्येव तु तत्रोक्तं कर्त्तृत्वमितरस्य तु।
इतिहासं पुरावृत्तमृषिभिः परिकथ्यते[७] ॥४२॥
समागच्छन्मरुद्भिस्तु[८] चरन् व्योम्नि शतक्रतुः।

---

(१) क॰ ख॰ घ॰ च॰ पुस्तकेषु, मेघः शकस्य धूम इत्यादि सौरी चान्या सरस्वते इत्यन्तपाठो न विद्यते, तेषु च यत्र स्थले,—

सूक्तमल्पस्तवं लिलज्ज्ञानमेव प्रशंसति।
प्रवादबहुलत्वाच्च ततः सलिलमुच्यते ॥

इति पाठो वर्त्तते।

(२) कयेतीति ख॰।

(३) ततः इति ख॰ ङ॰।

(४) मरुजः इति ङ॰।

(५) तत्रेति ङ॰।

(६) उत्तरः इति ग॰, मारुत्यस्तिस्र उत्तरा इति ङ॰ पुस्तकान्तरस्थ।

(७) ऋचस्येव तु तत्रोक्तमित्यादि ऋषिभिः परिकथ्यते इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते।

(८) चेति ख॰ ङ॰।

---

(क) ऋ॰ १, १४६, २।

दृष्ट्वा तुष्टाव तानिन्द्रस्तेनैन्द्र[१]मृषयोऽब्रुवन् ॥४३॥
तेषामगस्त्यः संवादं तपसा वेद[२]तत्त्वतः ।
स तानभिजगामाशु निरुप्यैन्द्रं हविस्तदा ॥४४॥
मरुतश्चाभितुष्टाव सूक्तैस्त्वदिति च[३] त्रिभिः[४] ।
महश्चिदिति चैवेन्द्रं सहस्रमिति चैतया[५] ॥४५॥
निरुप्तं तद्धविश्चैन्द्रं मरुद्भ्यो दातुमिच्छति[६] ।
विज्ञायावेक्ष्य तद्भव्यं त्विन्द्रो[७] नेति तमब्रवीत्[८] ॥४६॥
न श्वो नाद्यतनं ह्यस्ति वेद कस्तद्यदद्भुतं ।
कस्यचित्त्वथ सञ्चारे[९] चित्तमेव विनश्यति ॥४७॥
किन्न इत्यब्रवीदिन्द्रमगस्त्यो भ्रातरस्तव ।
मरुद्भिः सम्प्रकल्पस्व[१०]वधीर्मा च[११] शतक्रतो ॥४८॥

---

(१) ते चैन्द्रमिति ख० ग० ङ० पुस्तकान्तरञ्च ।
(२) तपसाबोधीति ख० ङ० पुस्तकान्तरञ्च ।
(३) तन्विति त्विति क० घ० च० ।
(४) तन्विति पञ्चभिरिति ग० ।
(५) महश्चिदित्यनेनैन्द्रं सहस्रं त ऋषाय्य यमिति ख० ङ० पुस्तकान्तरञ्च ।
(६) इच्छयेति ख०, इच्छतः इति ङ० पुस्तकान्तरञ्च ।
(७) तद्भावमिन्द्रः इति ख० ङ० पुस्तकान्तरञ्च ।
(८) ततोऽब्रवीदिति ख० ङ० पुस्तकान्तरञ्च ।
(९) त्वथ सञ्चारे इति ख० ङ० पुस्तकान्तरञ्च ।
(१०) सम्प्रकल्पस्वेति ख० ङ० ।
(११) मा नः इति ख० ङ० पुस्तकान्तरञ्च ।

किं नो भ्रातरिति तस्यामिन्द्रो मान्यमुपालभत् ।
अगस्त्यस्त्वरमित्यस्यां चुम्न[१]मिन्द्रं प्रशामयत्[२] ॥४८॥
प्रादात्संवननं[३] कृत्वा तेभ्य एव च तद्भविः ।
पूर्व्वया सान्त्वयन्निन्द्रो ह्यगस्त्यं स्नेहकाम्यया ॥५०॥
एवं संवननं कृत्वा प्रादात्तेभ्यः स तद्धविः[४] ।
सुते[५] चकार सोमे च[६] तानिन्द्रः सोमपीथिनः[क] ॥५१॥
तस्मादिद्याभ्निपातेन[७] ऐन्द्रेषु[८] मरुतस्तु तान्[९] ।
प्रीतात्मा पुनरेवर्षिस्तांस्तुष्टाव पुनः पृथक्[१०] ॥५२॥
मरुतः प्रेति सूक्ताभ्या[११] मिन्द्रं षड्भिः परैस्तु सः[१२] ।

(१) क्रुद्धमिति ख० ङ० पुस्तकान्तरञ्च।
(२) प्रसादयदिति ख० ङ०. प्रसाधयदिति पुस्तकान्तरम्।
(३) सङ्गमनमिति क० ग० घ० च०।
(४) पूर्व्वया सान्त्वयन्निन्द्र इत्यादि स तद्धविरित्यन्तपाठः, क० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(५) सूते इति ग०।
(६) सोमेऽथेति ख० ङ० पुस्तकान्तरञ्च।
(७) निपातेष्विति ङ० पुस्तकान्तरञ्च।
(८) नन्द्रेष्विति ख०।
(९) मरुतः स्तुताः इति ङ० पुस्तकान्तरञ्च।
(१०) पृथक् पृथगिति ख० ङ० पुस्तकान्तरञ्च।
(११) प्रतिसूक्ताभ्यामिति ख० ङ० पुस्तकान्तरञ्च।
(१२) गायन् षड्भिः शचीपतिरिति ख० ङ० पुस्तकान्तरञ्च।

(क) ऋ० १०, ६५, ८।

ऋतुस्नाता[१] ऋषिर्भार्या लोपामुद्रां यशस्विनीं ॥५३॥
उपजल्पितुमारेभे रहःसंयोगकाम्यया ।
द्वाभ्यां सा त्वब्रवीदृग्भ्यां पूर्वीरिति चिकीर्षितं ॥५४॥
रिरंसुस्तामथागस्त्य उत्तराभ्यामतोषयत् ।
विदित्वा तपसा सर्वं तयोर्भावं रिरंसतोः ॥५५॥
उक्तैनं[२] कृतवानस्मिन्[३] ब्रह्मचार्युत्तमे जगौ ।
प्रशंस्य[४] तं परिष्वज्य गुह्य नूःर्यवजिघ्रतुः ॥५६॥
स्मितेनमाहतुस्त्वोभावनागा असि[५] पुत्रक ।
युवो[क]रजांसीति ततः सूक्तैः पञ्चभिरश्विनौ ॥५७॥
अगस्त्य एव तुष्टाव सूक्तेन कतरे तुण[६] ।
द्यावापृथिव्यौ सूक्तेन आनो विश्वान् दिवौकसः ॥५८॥
पितु[ख]मन्नं समिद्धाप्र्यो अग्निमग्ने नयेति च[७] ।
बृहस्पतेरनर्वाणं[ग] कंकतोपनिषत्परं[८] ॥५९॥
अपां तृणानां सूर्यस्य केचिदेतां स्तुतिं विदुः ।

(१) ऋतौ स्नातामिति क० घ० च० ।
(२) न त्वेनः इति ख० ग०, नत्वेतदि ङ० पुस्तकान्तरच ।
(३) चस्मीति ख० ग० ङ० ।
(४) प्रशस्येति ग० ङ० ।
(५] चोभौ ह्यनागोऽस्मीतीति क० ग० घ० च० ।
(६) कतरेति परेयं त्विति क० घ० च०, सूक्तेन कतरेति त्वि ङ० ।
(७) समिद्धो ह्याप्रियोऽग्ने च नयामये इति ख० ङ० पुस्तकान्तरच ।
(८) परेति ख० ङ० पुस्तकान्तरच ।

(क) ऋ० १, ३४, १ । (ख) ऋ० १, ६१, ७ । (ग) ऋ० १, ६७, १ ।

ददर्श तदगस्त्यो वा[१] विषमं विषमंकया ॥६०॥
अदृष्टास्यो विश्वरूपः[२] सूक्तस्यांसोऽत्र तु त्वृचः[३] ।
अस्तौ[४]दृत्वमदोऽग्निं त्वं[५] जातवेदस[६]माप्रियः ॥६१॥
यज्ञेनाथ समिद्धोऽग्निरतोऽग्निं[७] सप्तभिर्ज्जवे[क] ।
संयुज्य[८] तपसात्मानमैन्द्रं विभ्रन्महद्वपुः ॥६२॥
अदृश्यत मुहूर्त्तेन दिवि च व्योम्नि चेह च ।
तमिन्द्रमिति मत्वा तु[९] दैत्यौ भीमपराक्रमौ ॥६३॥
धुनिश्च चुमुरिश्चैव[१०] सायुधावभिपेततुः ।
विदित्वा स तयोर्भावमृषिः[११] पापचिकीर्षतोः ॥६४॥
यो जात इति सूक्तेन कर्माण्यैन्द्राण्यकीर्तयत् ।

(१) त्विति ख० ङ० पुस्तकान्तरञ्च ।
(२) अदृष्टाख्यो नष्टरूप' इति ख० ङ० पुस्तकान्तरञ्च ।
(३) द्यृचः इति ग० ।
(४) स्तौतीति ङ० पुस्तकान्तरञ्च ।
(५) अग्नित्वमिति ग० ङ० ।
(६) जातवेदस्यमिति ख० ग० ।
(७) यातोऽग्निमिति क० घ० च०, अग्निरिति ङ० ।
(८) संयोज्येति ख० ङ० पुस्तकान्तरञ्च ।
(९) तौ इति ङ० ।
(१०) चोभाविति ख० ङ० पुस्तकान्तरञ्च ।
(११) ऋषिरिति क० घ० च० ।

(क) ऋ० १, १७, ७ ।

उक्तेषु[१] कर्मस्विन्द्रेषु भीतावाशु विवेश ह[२] ॥६५॥
इदमन्तरमित्युक्त्वा ताविन्द्रस्तु न्यवर्तयत् ।
निहत्य तौ गृत्समदमृषिं[३] शक्रोऽभ्यभाषत ॥६६॥
यथेष्टं मास[४]खे पश्य प्रियस्त्वं[५] ह्यागतोऽसि[६] मे ।
वरं वृणीष्व मत्तस्त्वमक्षय्यं[७] चास्तु ते तपः ॥६७॥
प्रज्ञ[८]स्तं प्रत्युवाचर्षिरस्माकं वदतां वरः[९] ।
तनूनामस्तु चारिष्टिर्वाक्चास्तु हृदयङ्गमा ॥६८॥
सुवीरा[क]रयिमन्त[ख]श्च वयन्त्वामिन्द्र धीमहि[१०] ।
इन्द्र[११]त्वाञ्च विजानीमो वयं जन्मनि[१२] जन्मनि ॥६९॥

---

(१) कीर्त्तिष्विति क० ग० घ० ।
(२) भीतौ समुपतुस्तदेति ख० ङ० पुस्तकान्तरच ।
(३) इदमिति ख० पुस्तकान्तरच ।
(४) मासमिति पाठः सङ्गतः ।
(५) मास खे पश्य प्रियस्त्वमिति क० ग० घ० । अत्र, मांसं खे पश्यं प्रियस्त्वमिति पाठो विशुद्धः ।
(६) प्रियत्वं चागतोऽसीति ख० ।
(७) मत्स्वात्त्वयमिति क० घ० च० ।
(८) प्रज्ञः इति क० ग० च० ।
(९) वरेति क० ग० घ० च० ।
(१०) इन्द्र वामहे इति ख०, इन्द्रमीमहे इति ङ० ।
(११) इन्द्रमिति ङ० ।
(१२) ज्ञजनीति क० ग० घ० च० ।

---

(क) ऋ० ६, १९, ५ । (ख) ऋ० १०, ७४, १ ।

त्वद्गत[१]स्त्वेष मे भावो मापगास्त्वद्रथीतरः[२]।
निरुक्तं तदिदं चार्षमिन्द्रश्रेष्ठान्वृचान्यया ॥७०॥
वव्रे वरमिदं सर्व्वं तदाकर्ण्य शचीपतिः[३]।
तथेत्युक्त्वा तुराषाट् त्वां[४] पाणौ जग्राह दक्षिणे ॥७१॥
ऋषिश्चास्य सखित्वेन पाणिना पाणिमस्पृशत्।
सहितौ जग्मतुश्चैवं महेन्द्रसदनं[५] प्रति ॥७२॥
तत्रैनमार्हयत्प्रीत्या स्वयमेव पुरन्दरः।
कर्म्मणा विधिदृष्टेन तमृषिश्चाभ्यपूजयत्[६] ॥७३॥
सखित्वाच्च पुनस्तेन[७]मुवाच हरिवाहनः।
गृणन्मादयसे यस्मात्त्वमस्मानृषिसत्तम ॥७४॥
तस्माद्गृत्समदो नाम शौनहोत्रो[८] भविष्यसि।
ततो द्वादशभिः सूक्तैस्तुष्टावेन्द्रं शुधी[९][क]त्यृषिः ॥७५॥

---

(१) त्वा तत इति क० ङ० च०।
(२) मापगाश्च रथीतरः इति ङ० पुस्तकान्तरञ्च।
(३) निरुक्तं तदिदं चार्षमित्यादि तदाकर्ण्य शचीपतिरित्यन्तपाठः, क० ग० ङ० च० चिह्नितपुस्तकेषु, नोपलभ्यते।
(४) त्वामित्यत्र तमितिपाठः शुद्धः। रथाङ्गन्त्विति ख० ङ० पुस्तकान्तरञ्च।
(५) महेन्द्रभवनमिति ख० ङ० पुस्तकान्तरञ्च।
(६) चाभ्यपूजयदिति क०। तमृषिं चाभ्यपूजयदिति ख० ग० ङ० च०।
(७) स्तवमिति पुस्तकान्तरम्।
(८) शौनकोऽत्र इति ख०।
(९) इन्द्रस्तु धीत्यृषिरिति क० पुस्तकान्तरञ्च।

---

(क) ऋ० १, २५, १८।

ददर्श संस्तवश्चैव तत्र स ब्रह्मणस्पतिम्।
बृहस्पतिं तु तुष्टाव दृष्टलिङ्गाभिरेव च[१] ॥७६॥
स तमप्यभितुष्टाव[२] चतुर्भिरत[३] उत्तरैः।
गणानां विश्वमित्यस्यां[४] सहेन्द्राब्रह्मणस्पती ॥७७॥
बृहस्पति प्रसङ्गाद्वा[५] ब्रह्मणस्पतिमेव च[६]।
तुष्टाव कर्मणैकेन प्रभावस्यान्तरन्तयोः[७] ॥७८॥
मित्रावरुणदर्चांशतुविजात(क)भगार्यम्णाम्[८]।
आदित्यानामिमाः [९]सूक्तमिदं वारुणमुच्यते[१०] ॥७९॥

---

(१) बृहस्पतिस्तु तुष्टाव दृष्टि चिङ्गस्तवैः सहेति ख०, दृष्टलिङ्गस्तवैः सहेति ङ०।
(२) चाभ्यभितुष्टावेति क० ख० ग० पुस्तकान्तरञ्च।
(३) चतुर्भिरिति उत्तरैरिति ग०, चतुर्भिरित उत्तरैरिति ङ०, चतुर्भिरेत उत्तरैरिति पुस्तकान्तरम्।
(४) चस्या इति ङ०, विश्वामित्रस्येति ख०।
(५) प्रसङ्गत्वादिति ख० ङ०।
(६) ब्रह्मणस्पतिमेव वेति ङ०।
(७) दयोरिति ग०। श्लोकार्द्धमेतत् ख० ङ० चिह्नितपुस्तकयोर्नोपलभ्यते।
(८) तुविजातभगार्यमाणमिति ख०।
(९) इमाप्युक्तमिति ख०। इमाः इत्यत्र इदमिति पाठो विशुद्धः।
(१०) वरुणमिति ग०।

---

(क) ऋ० १, १३१, ७।

(१)धृतव्रता वैश्वदेवमृतमैन्द्रं परन्तु यत्(२)।
मयि क्रतुमिति त्वामिन्द्रासोमौ सह स्तुतौ ॥८०॥
सरस्वति त्वमित्यस्मिन्नर्द्धर्चे मध्यमा तु वाक्(३)।
बृहस्पतिन्तु यो नस्तु(४) उत्तमा मरुतस्तुतिः(५) ॥८१॥
अस्माकं वैश्वदेवन्तु सूक्तादावुत्तमस्य तु(६)।
द्यावापृथिव्योर्द्वे त्वाद्यौ(७) तथैवैन्द्रौ(८) परे ततः ॥८२॥
द्वे द्वे राकासिनीवाल्योः षड्लैङ्ग्योऽग्यास्तथान्तया(९)।
(१०)रौद्रं मारुतन्तु परं(११)मा ते धारावरा इति ॥८३॥

(१) वायवीयो म इत्याद्या दुःस्वप्नाद्यप्रणाशिनीः। श्लोकार्द्धमेतत् ग० चिह्नितपुस्तके धृतव्रतेति श्लोकात् पूर्व्वमधिकं पठितं।

(२) परं यत इति ख०, परं तत इति ङ०।

(३) माध्यमानुवागिति ख०।

(४) बृहस्पते स्तुतिर्या मा इति ख०, यो न स्त इति ग०।

(५) बृहस्पते स्तुतियों उ काम्बऋक्भवतां स्तुतिः इति ङ०।

(६) अस्माकं वैश्वदेवं स्यात् सूक्तादावस्य चास्य ऋगिति ग०, स्याद्या ऋक् धान्तिमास्य त्विति ङ० पुस्तकान्तरञ्च।

(७) ऋगुद्यावापृथिवीत्यृचेति क० घ० च०, द्यावापृथिव्योस्त्वाद्यौ वै इति ख०। वै इत्यत्र वा इति ग०।

(८) वाथ चैन्द्रा इति ग०, चैन्द्रौ वर्वौ इति ङ० पुस्तकान्तरञ्च।

(९) तथान्त्ययेति ग०, षड्भुग्वाधन्तया स्तुताः इति क० घ० च०।

(१०) ख० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च रौद्रमित्यस्मात् पूर्व्वं, तत्पूर्व्वे द्वे ऋचौ कुह्वाः कुह्वमहमिति स्तुते। तदुत्तरे द्वे अनुमतेरनुनो न्विति ते स्तुते। धातुस्तत्स्तवादौ धाता ददातु नो रयिम्(क)। इत्यधिकं पठितं।

(११) रौद्रं स्यात् परमारुतमिति पुस्तकान्तरम्।

(क) ऋ० १, १, ३।

वामदेवो मृगान् दृष्ट्वा विभ्यत्तेभ्य ऋषिः स्वयम्(१)।
(२)अपान्नपादुपेत्यत्र स्तुतः सूक्ते ततः(३) परे ॥८४॥
तुभ्यमित्यार्भवे(४) सूक्ते सावित्रादाश्विनमपरम्(५)।
सोमः पूषादितिश्चैव सोमापूष्णेन्द्रया स्तुताः ॥८५॥
वायव्ये(६) वैन्द्रवायव्या अन्यास्तु प्रउगा(क)स्तुचाः(७)।
मैत्र्यृक् स्तौति हविर्धाने अग्निस्तत्र निपातभाक् ॥८६॥
द्यावापृथिव्यौ द्यावेति हविर्धाने ततः परे।
(८)स्तुतिन्तु(९) पुनरेवैच्छदिन्द्रो भूत्वा कपिञ्जलः ॥८७॥

---

(१) वामवस्तु मृगान् स्तोत्यम्बनि निप्रस्थितांस्तु चि। इति क० घ० च०, मृगं दृष्ट्वेति ग०।

(२) ग० ङ० चिह्नितपुस्तकयोः पुस्तकान्तरे च अपान्नपादित्यस्मात् पूर्वं कुहि श्रुतमिति तस्यां रुद्रमस्तौत्प्रसादयन्नित्यधिकं पठितं।

(३) स्तव इति पुस्तकान्तरम्।

(४) इत्यार्तवे इति ख० ङ० पुस्तकान्तरञ्च।

(५) श्लोकार्द्धमेतत् ग० चिह्नित पुस्तके नोपलभ्यते।

(६) वायव्ये इति ग०।

(७) वायव्ये चैन्द्रवायवी पश्चात् प्रउगास्तुचा इति क० ग० घ० च०।

(८) ङ० चिह्नितपुस्तके पुस्तकान्तरे च स्तुतिमिति श्लोकार्द्धात् प्राक्, वायव्येयो म इत्येषा दुःखप्रायप्रत्यग्निनीति श्लोकार्द्धमधिकं दृश्यते।

(९) स्तुतन्विति ख०।

---

(क) ऋ० १०, १३०, ३।

वैश्वानरो वरुणो जातवेदाः।
स्तूयेतैका यत्र यत्रास्तुतिर्वा[1]
नैपात्यांस्तां[2]श्चोपमार्थांश्च[3] विद्यात् ॥९१॥
राजर्षयो गृत्समदो वसिष्ठो
भरद्वाजः कुशिको गौतमाश्च।
विश्वेऽश्विनावङ्गिरसोऽत्र योऽदिति-
र्भोजाः कण्वो[4] भृगवो रोदसी दिशः ॥९२॥
सावित्रसौम्याश्विन[5]मारुतेषु
ऐन्द्राग्नेये रौद्रसौर्य्यौषसेषु[6]।
आदावन्ते सूक्तमध्ये स्तुतास्तु[7]
न व्याप्नन्ति देवताः सूक्तभाजः[8] ॥९३॥
अग्नेः सप्तदशोऽध्याय ऊर्द्ध ऊषुण ऊतये[क]।

---

(१) एको यत्र तत्रान्यस्तुतिर्वेति ख॰ ङ॰ पुस्तकान्तरञ्च।

(२) निपातार्थां॰ इति क॰ ग॰ घ॰ च॰।

(३) उपमार्थांश्चेति पाठ॰ साधुः।

(४) कण्वा इति ख॰ ङ॰ पुस्तकान्तरञ्च।

(५) सौर्य्याश्विनेति ख॰ ङ॰ पुस्तकान्तरञ्च।

(६) सौम्यौषसेष्विति ख॰ ङ॰ पुस्तकान्तरञ्च, चौषिसेष्विति च॰।

(७) स्तुतास्ता॰ इति ङ॰ पुस्तकान्तरञ्च।

(८) अन्ते देवता सूक्तनामिनीमिति पुस्तकान्तरम्, सूक्तभाजा इति ग॰, सूक्तभागिनामिति ङ॰।

---

(क) ऋ॰ १, ४, १।

एते काण्व्यावृचौ योप्यौ ह्यञ्जन्ति लेति पञ्च च[१] ॥९४॥
शेषा वज्रेभ्यो यूपेभ्यो[२] वैश्वदेवी त्वृगष्टमी[३]।
अंसा[क]न्त्या प्रशिनी योक्ता[४] षष्ठमैन्द्राग्न[५]मुच्यते ॥९५॥
वैश्वदेव्यग्निमुपसं[६] दधिकाव्णेति[७] चेतया।
आग्नेन्द्री त्वम इन्द्रेति परा[८] वैश्वानरस्तृचः ॥९६॥
प्रयन्तु मारुता[९]श्चान्त्या शतधारऋतुस्तवः।
प्र वो वाजा ऋतू[१०] स्तौति ऋत्विजः स्तौति[११]मन्यतः॥९७॥
पुरीष्यास[१२] [ख]इति त्वसान्धिष्ण्यानग्नीन् प्रशंसति।

---

(१) एते काण्वावृचौ चोभौ योप्यौ ह्यञ्जन्ति पञ्च चेति ख०।
(२) शेषेभ्यो वज्रयूपेभ्य इति ग०।
(३) वैश्वदेवी ऋगष्टमीति क०, वैश्वदेवीत्वृगष्टमीति पुस्तकान्तरम्।
(४) स्यान्ता प्रशस्यना योक्तेति घ०।
(५) स्यान्ताः प्रशस्यनाः योक्तेन्द्राग्नी ऐन्द्राग्नमिति ङ० पुस्तकान्तरञ्च।
(६) अग्निमुपसं वैश्वदेवीति क० ख० ग० घ० च०।
(७) दधिक्रामितीति क० ग० घ० च०।
(८) अग्नीन्द्री त्वम इन्द्रयजं परेति ङ० पुस्तकान्तरञ्च।
(९) प्रयन्तमारुतः इति ख० ङ० पुस्तकान्तरञ्च।
(१०) ऋतूनितिपाठः समीचीनः।
(११) स्तौति ऋत्विजश्चैवेति ख० ङ० पुस्तकान्तरञ्च।
(१२) पुरीष्यास इति ग०।

---

(क) ऋ० १, १९१, ७। (ख) ऋ० ३, २२, ४।

ज्ञेया[१]श्चैव तु होतारस्ते दैव्याश्चैव तत्र तु[२] ॥९८॥
त्रयोविंशतिरैन्द्राग्नौ इच्छन्तीति पराश्च तः ।
सूक्ते प्रेति तु नद्यश्च विश्वामित्रं समूदिरे[३] ॥९९॥
[४] पुरोहितः सन्निज्यार्थं सुदासः सोऽहरद्धनम् ।
विपाट्छुतुद्र्योः सम्भेदं शमित्येते उवाच ह ॥१००॥
प्रवादास्तत्र दृश्यन्ते द्विवद्बहुवदेकवत् ।
अच्छेत्यर्द्धर्चं पच्छो वा नदीष्वप्येकवन्ति ते ॥१०१॥
आद्ये द्वृचे द्विवत्त्वार्द्धं विश्वामित्रवच.श्रुतेः ।
एताभिर्ऋग्भिर्वा नद्य ऋषिं बहुवदूचिरे ॥१०२॥
षष्ठ्यष्टम्यो[५]श्चतुर्थ्याश्च दशम्याश्चेतरा ऋचः ।
सप्तम्यामृचि षष्ठ्याश्च यौ देवौ[६] परिकीर्तितौ ॥१०३॥
निपातिनौ तु तौ ज्ञेयौ त्वैन्द्रापार्वत्यृगुत्तमे[७] ।
करोति पुत्रिकां नारी[८] यथा दुहितरन्तथा ॥१०४॥

---

(१) यूथा इति ख० ।
(२) तत्र हेति ख० ङ० ।
(३) विश्वामित्रः समूहिरे इति ख० ग० पुस्तकान्तरञ्च, स संवदन्निति क० घ० च० ।
(४) पुरोहित इत्यादि श्लोकत्रय क० घ० ङ० चिह्नितपुस्तकेषु नोपलभ्यते ।
(५) षष्ठ्यष्टम्योरिति पाठः साधुः ।
(६) यौदकौ इति ग० ।
(७) पार्वत्यगृत्तमेति ङ० पुस्तकान्तरञ्च ।
(८) नामेति ख० ङ० पुस्तकान्तरञ्च ।

तस्यां सिञ्चति रेतो वा[१] तच्छशदिति कीर्तितम् ।
रिक्थस्य दुहितुर्दानं नेत्यृचि प्रतिषिध्यते[२] ॥१०५॥
तस्याश्चैव[३] यवीयांसं भ्रातरं ज्येष्ठवत्सुतं ।
सुदासश्च महायज्ञे दक्षिणा गाधिसूनवे[४] ॥१०६॥
निगृहीतं बलाच्चेतः[५] सोऽवसीदद्विचेतनः ।
तस्मै [६]ब्राह्मीन्तु सौरीं वा नाम्ना वाचं ससर्परीं ॥१०७॥
सूर्य्यवयादिहागत्य ददुस्ते[७] जमदग्नयः ।
कुशिकानां ततः सा वागमतिन्तामपाहनत् ॥१०८॥
उपेत्य चाख्यां[८] कुशिकान् विश्वामित्रो बुबोध यत् ।
लब्ध्वा वाचं च हृष्टात्मा[९] तानृषीन् प्रत्यपूजयत्[१०] ॥१०९॥
ससर्परीरिति द्वाभ्यामृग्भ्यां वाच स्तुवन् स्वयम् ।
स्थिरावित्यनसो[क]ऽङ्गान्यनडुह[११]श्च गृहान् व्रजन् ॥११०॥

---

(१) रेतो धा इति ङ॰ पुस्तकान्तरञ्च ।
(२) प्रतिषेधतीति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(३) तस्याश्चाह्वेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(४) शक्तिना गाधिसूनवे इति क॰ ग॰ घ॰ च॰ ।
(५) गृहीत्वा बडवाश्चेत॰ इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(६) तस्येति क॰ घ॰ ।
(७) तां ददुरिति ख॰ ङ॰ पुस्तकान्तरञ्च । आगत्येत्यत्र आहृत्येति क॰ ग॰ घ॰ च॰ ।
(८) उपेति चास्या कुशिकानिति क॰ घ॰, उपेत्य वाचं कुशिकानिति ङ॰ ।
(९) प्रतिष्ठात्मेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(१०) अन्वचेतयदिति ङ॰ पुस्तकान्तरञ्च ।
(११) इयनसाङ्गान्यनडुहमिति क॰ घ॰ । अनडुहमित्यत्र अनडुहः इति घ॰ ।

---

(क) ऋ॰ ४, १०, १० ।

(१)अनसोऽङ्गानि चोत्थाप्य अनड्वाहौ स्वहात्मजौ।
ततश्च स्वशरीरञ्च स्वहान् स स्वयमाप ह ॥११११॥
रथञ्च स्वशरीरेण स्वहान् गच्छन् परादृदे।
परायतन्तो यास्तत्र वसिष्ठद्वेषिणीर्विदुः(२) ॥११२॥
विश्वामित्रेण याः(३) प्रोक्ता अभिशापा इति स्मृताः।
द्विषद्द्वेषास्तु ताः प्रोक्ता विद्याद्वेवाभिचारिकाः(४) ॥११३॥
वसिष्ठास्ता(५)न शृण्वन्ति तदाचार्यकसम्मतम्।
कीर्त्तनाच्छ्रवणादापि महान् दोषः प्रजायते(६) ॥११४॥
शतधा भिद्यते मूर्द्धा कीर्त्तितेन श्रुतेन वा।
तेषां बालाः प्रमीयन्ते तस्मात्तास्तु न कीर्त्तयेत् ॥११५॥
विश्वांश्च देवां(७)स्तुष्टाव चतुर्भिरिममित्यृषिः।
अस्तौदिश्वात्मना सर्व्वान् मन्यमानः परं पदम् ॥११६॥

---

(१) अनस इत्यादिसार्द्धश्लोकः क० ग० घ० चिह्नितपुस्तकेषु नेष्यते। तेषु अस्मिन् स्थले, तन्वञ्च स्वां शरीरञ्च महानाच्छन् परीददे इति पाठोऽस्ति।

(२) वसिष्ठद्वेषिण्यः स्मृताः इति क० ख० ग० घ०।

(३) लिपि क० ख० ग० घ० ध०।

(४) विद्वेषिण्यः स्मृता विद्यादभिचारेषु प्रच्यते। इति क० ग० घ० ध०।

(५) लिपि ख० पुस्तकान्तरञ्च, ते इति ख०।

(६) श्लोकार्द्धमेतत् क० घ० चिह्नितपुस्तकयोर्न दृश्यते।

(७) विश्वान् देवांश्चेति ङ० पुस्तकान्तरञ्च।

(१)देवानामसुरत्वं तदेकं मह्यदितीरयन्।
अश्विनौ मित्र ऋभवो(२) धेनुर्मित्र इहेह वः ॥११७॥
(३)वैश्वदेवीति विज्ञेया मैत्री मित्राय पञ्च तु।
ऐन्द्रार्भवस्तृचस्त्वार्भवे सूक्तः स उत्तमः(४) ॥११८॥
(५)पूर्व्वे तृचे निपातीन्द्र उपो वाजेन पञ्चमात्।
उपस्यादुत्तरे षड्भिः स्तुता स्वन्देवता तृचैः(६) ॥११९॥
ऐन्द्रावरुणः प्रथमो वार्हस्पत्यस्ततः परः(७)।
पौष्णसावित्रसौम्याश्च मैत्रावरुण उत्तमः(८) ॥१२०॥
तुष्टाव जमदग्निश्च(९) तेन देवा हृता ऋषौ।
देवर्षिपितृपूजार्थं स अन्नाद्यमपचच्चुनः(१०) ॥१२१॥

---

(१) अक्तौदित्यात्मना सर्व्वानित्यादि मह्यदितीरयन्नित्यन्तपाठः क॰ ग॰ घ॰ चिह्नितपुस्तकेषु नोपलभ्यते।
(२) स्तवः इति क॰ घ॰ च॰।
(३) वैश्वदेवीति श्लोकार्द्धं ख॰ ङ॰ चिह्नितपुस्तकयोर्न विद्यते।
(४) उत्तमे इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) पूर्व्वे तृचे इति श्लोकार्द्धं क॰ ख॰ घ॰ चिह्नितपुस्तकेषु नेष्यते।
(६) चोपसादुत्तरास्त्वन्ये षट् पृथग्देवतास्तृचाः इति क॰ ख॰ ग॰ घ॰ च॰।
(७) तथापरः इति ग॰। तदुत्तरः इति ङ॰।
(८) यस्यामन्त्यस्तु यत्तृचः इति ङ॰ पुस्तकान्तरञ्च।
(९) जमदग्निस्तु इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(१०) यथायाम्नायिपच्छुन इति क॰ ग॰ घ॰ च॰।

यस्य वै श्येनरूपेण अहर(१)द्दृत्रहा मधु।
सोऽग्निन्तु पञ्चदशभिरिन्द्रं षोड़शभिः परैः ॥१२२॥
ऋषिस्त्वामिति तुष्टाव सूक्तैरेतैस्तु(२) गौतमः।
स भ्रातरमिति त्वास्तु(३) तिसृष्वग्निर्निपातभाक् ॥१२३॥
वरुणेनाभिसंस्तौति पाद(४)रन्वे निपातितम्।
लिङ्गोक्तदेवते सूक्ते एके(५) प्रत्यग्निरेव तु(६) ॥१२४॥
ऋषिर्वाधदिति द्वाभ्यां स्तौति सोमकमेव तु(७)।
तस्यैव वायुर्याय(८) पराभ्यामश्विनौ स्तुतौ ॥१२५॥
अश्वसानुजनिष्येऽहं(९) ब्रुवाण गर्भ एव(१०) तम्(११)।
अन्वगात्त्वदिति.(१२) पुत्रमिन्द्रमात्महितैषिणी ॥१२६॥

---

(१) यस्य च श्ये रूपेण चाहरदिति ख० ङ० पुस्तकान्तरञ्च।
(२) एति त्विति ग० घ०, एति चेति ङ० पुस्तकान्तरञ्च।
(३) त्वाश्विति ङ०।
(४) अभिसंस्तौत्या पाङ्क्तेरिति क० ग० घ० च०।
(५) लिङ्गोक्तदैवत सूक्तमेते इति क० च०।
(६) लिङ्गोक्तैर्दैवते सूक्ते एके प्रत्यग्निरिव तु भे, इति ङ०।
(७) सोमकभूपतिमिति ङ० पुस्तकान्तरञ्च।
(८) चादुषोऽर्धायेति ख० ङ० पुस्तकान्तरञ्च।
(९) जनिष्यामेति क० ख० घ०, जनिष्याम इति ग०।
(१०) गर्भमेवेति क० ग० घ० च०।
(११) त्विति क० ख० ग० घ० च०।
(१२) अन्वगाददितिरिति ङ० पुस्तकान्तरञ्च।

स जातमात्रो युद्धाय चषिमेवाजुहाव तं(१)।
योधयन्(२)वामदेवस्तं फलात्मनि वलं तथा ॥१२७॥
दिनानि दश रात्रीश्च(३) विजिग्ये चैनमोजसा।
स तङ्क दश(४)मित्यस्यां विक्रोशन्नृषिसंसदि ॥१२८॥
स्वयमेवाभितुष्टाव(५) नकि(क)रिन्द्रेति(६) गौतमः।
किमादुतासीति चास्यां(७) मन्युं मध्ये(८) पराणुदत् ॥१२९॥
अथास्य रूपवीर्य्याणि धैर्य्यकार्य्याणि तान्यृषिः(९)।
विविधानि च कर्म्माणि प्रशंसादितये तथा ॥१३०॥

---

(१) स जातमात्रं युद्धायेति क॰ ख॰ ग॰ घ॰ च॰।
(२) योधयेदिति क॰ ख॰ घ॰ च॰।
(३) रात्र्यश्चेति क॰ ग॰ घ॰ च॰।
(४) सतङ्क द्दत्यमिति ग॰।
(५) स्वयं तेनाभितुष्टावेति ग॰, स्वयमेवाभितुष्टावेति ङ॰ पुस्तकान्तरञ्च।
(६) इन्द्रेणेति ङ॰।
(७) किमादुतासीदित्यस्यामिति ङ॰ पुस्तकान्तरञ्च।
(८) मन्युमर्धे इति क॰ ग॰ घ॰ च॰, मन्युमध्ये इति ख॰।
(९) धैर्य्याण्यार्य्याणि चारित्र्यिति क॰, धैर्य्याण्यश्वाणि चारित्र्यिति घ॰ च॰, तान्द्वषिरिति ङ॰।

---

(क) ऋ॰ १, २७, ८।

## अथ पञ्चमोऽध्यायः ।



प्रेति पञ्चार्भवं चौणि(१) दधिक्राणि पराण्यतः ।
ऋग्द्यावापृथिव्यौ स्तौति दधिकाव्णां(क)मुखे तु या(२) ॥ १ ॥
परोचैरसुतो वाग्भिर्नामभिस्तु स्तुतास्त्रयः ।
अग्निर्वायुश्च सूर्यश्च हंसः शुचिषदित्यृचा(३) ॥ २ ॥
नियुक्ता सूर्यदेवत्या हंस इत्यैतरेयके(४) ।
द्वे त्वैन्द्रावरुणे सूक्ते(५) तत्र(६) चौष्याश्विनाग्निकः(७) ।
अग्रं वायो विद्दी(ग) त्वेषु (८)वायव्याः सप्त कीर्त्तिताः ॥ ३ ॥

---

(१) पञ्चार्भवाणीति ङ० ।
(२) दधिक्रावृना स्तुतौ हि वामिति ख०, दधिक्राव्णा मुखे तु येति ग०, दधिक्राव्णानुतो (ख) हि वामिति ङ० ।
(३) इत्यृचेति क० ग० घ० च० ।
(४) स्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।
(५) द्वे इन्द्रावरुणे इन्द्रादिति ङ० ।
(६) तत इति ग० ङ० पुस्तकान्तरञ्च ।
(७) स्वाश्विनाग्निक इति क० ख० ग० घ० च० ।
(८) विद्दी मा त्वा इति ङ० पुस्तकान्तरञ्च ।

---

(क) ऋ० ४, ३९, २ ।     (ख) ऋ० १, २३, १५ ।
(ग) ऋ० ४, ४८, १ ।

नव चैवेन्द्रवायव्या ऐन्द्रा[१]स्तिस्रः शतेन षट्[२]।
इदं कथितदेवत्यं यस्तु स्तभोत्तमो दृचः[३] ॥४॥
स्तुतिरिन्द्राबृहस्पत्योरष्टावेता ऋचः स्मृताः।
बार्हस्पत्यन्तु तत्सूक्तमिदमित्यौषसे परे।
पुरो धातुः कर्मशता स इन्द्राजोच्यते[४] दृचे[५] ॥५॥
तत्साविची द्वे तु को वैश्वदेव[६]
मही द्यावा पृथिवीयं तत्परश्च[७]।
क्षेत्रस्येति तिस्रः क्षेत्रपत्याः[८]
शुनं[क] वाहाः शुनदेवी त्वगुत्तमा[९] ॥६॥

---

(१) इन्द्र इति क॰ ग॰ घ॰ च॰।

(२) शतेन षदिति ङ॰।

(३) इदमित्यौषसे परे इति क॰ घ॰ च॰, यस्तं स्तम्भोतिमो द्यच इति ग॰।

(४) स इन्द्राजोच्यते इति पुस्तकान्तरम्।

(५) स्तुतिरिन्द्राबृहस्पत्योरिति श्लोक क॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते।

(६) तत्साविचेको वैश्वदेवमिति ङ॰।

(७) परन्तु यदिति क॰ ग॰ घ॰ च॰।

(८) क्षेत्रस्य क्षेत्रपत्यन्तस्तृचस्त्विति क॰ घ॰, क्षेत्रस्येति क्षेत्रपत्यस्तृचस्त्विति ग॰।

(९) शुनदेवत्युत्तरेति ख॰ ङ॰ पुस्तकान्तरच।

---

(क) ऋ॰ ४, ५७, ५८।

वायुः शुनः सूर्य एवात्र[1] सीरः[2]
शुनासीरौ[क] वायुसूर्य्यौ[3] वदन्ति।
शुनासीरं यास्क इन्द्रन्तु मेने
सूर्य्येन्द्रौ तौ मन्यते शाकपूणिः ॥७॥
शुनासीरौ पञ्चम्यां तु स्तुतौ तौ
सीतायै षष्ठी त्वथ सप्तमी च[4]।
शुनं नः फालाः[ख] कृषि स्तौति पादः[5]
शुनं कीनाशाः[ग] कृषिजीवान् मनुष्यान्[6] ॥८॥
शुनं पादे पर्जन्य तृतीये[7]
चौनृषिः कृषिकामो[8]जगाद।

---

(१) एवात्रेत्यत्र त्वेवेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(२) सौर्य्यं इति क॰ घ॰ च॰।
(३) वायुसूर्य्यमिति क॰ घ॰ च॰।
(४) द्वे तु सीतायै षष्ठी सप्तमी चेति क॰ ग॰ घ॰ च॰।
(५) पादे इति ङ॰।
(६) कृषिजीमनुष्यानिति क॰ घ॰ च॰।
(७) स्तुत' पादेऽत्र पर्ज्जन्यस्तृतीये इति क॰ ग॰ घ॰ च॰।
(८) धन्यात् त्वृषिर्धर्म्मकाम इति क॰ घ॰ च॰, धन्यस्तृषिर्धनकाम इति ग॰।

---

(क) ऋ॰ ४, ५७, ५। (ख) ऋ॰ ४, ५७, ८। (ग) ऋ॰ ४, ५७, ८।

ऋषिं वा[१] स्तौति सर्व्वं हि सूक्त
ससुद्रादित्यग्नेर्मध्यमस्य ॥९॥
आदित्यं वा ब्राह्मणोक्तं प्रदिष्टं
ह्याग्नेय[२] यद्वाज्यसूक्तं[३] हि दृष्टं[४] ।
अपां स्तुतिं वा यदि वा हतस्तुतिं
गवां स्तुतिं वा सूक्त[५]मेतदवदन्ति ॥१०॥
स्वर्भानुदृष्ट सूर्यस्य अपघ्नत्य[६]तमोऽव्यय. ।
सप्तविंशतिभिः सूक्तैरबोधीत्यग्निमस्तुवन् ॥११॥
त्रैवृष्ण[क]स्त्रसदस्युश्च[ख] अश्वमेध इति त्रयः ।
स्तूयमानाः परीक्ष्याः स्युरन्विष्वेते[७]कचित् क्वचित्[८]॥१२॥
ऐक्ष्वाक[९] स्त्र्यरुणो राजा त्रैवृष्णो रथमास्थितः ।

---

(१) ऋषिवदिति क॰ घ॰ च॰ ।
(२) ह्याग्नेयमिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(३) वाप्याज्यसूक्तमिति क॰ घ॰ च॰, वा प्राज्यसूक्तमिति ग॰ ।
(४) प्रदिष्टमिति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(५) गव्यमेके सौम्यमिति क॰ ग॰ घ॰ च॰ ।
(६) स्वर्भानुदिष्टसूर्यस्यापघ्नन् ये इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(७) अन्विष्वेते इति घ॰ ।
(८) त्रैवृष्णत्रसदस्युश्चेति श्लोकः ख॰ ङ॰ चिह्नितपुस्तकयोर्न विद्यते ।
(९) ऐक्ष्वाकुरिति क॰ ग॰ घ॰ च॰ ।

---

(क) ऋ॰ ५, २७, १ । (ख) ऋ॰ ४, ३८, १ ।

अविन्दत पिशाचीं च[1] जाया तस्य च भूपतेः ॥१८॥
निषसः स तया सार्द्धं मासं द्यां कश्यपावपि[2] ।
तामुपामन्त्रयाञ्चक्रे कमेत त्वमिति त्वृचा[3] ॥१९॥
हरः[4] कुमाररूपेण वृशस्ता[5]मभ्यभाषत ।
विच्योतिषेति चोक्तायां सहसाग्निरदज्वलत् ॥२०॥
[6]पिशाचीमदहत्तां स यत्र चोपविवेश सा ।
एष एव परामृष्टो भार्गवी ब्राह्मणे [illegible] ॥२१॥
निदानसंज्ञके ग्रन्थे छन्दोगानामिति श्रुतिः [illegible] ।
भवेदेव परामर्शः सूक्तस्यास्य व्यपेक्षया [illegible] ॥२२॥
भवन्ति वाच्या मन्त्रा[10] हि विधिमद्दैव[11] [illegible]

(१) तामिति ग० ङ० पुस्तकान्तरस्थ।
(२) कपिशावपीति क० घ० च०।
(३) युवेत्यृचेति ङ०।
(४) नर इति क० घ० च०।
(५) ब्रुवंस्तामिति ख०।
(६) ख० ङ० चिह्नितपुस्तकयो [illegible]
इति श्लोकात् प्राक्, [illegible]
धिकं श्लोकार्द्धं पठितम्।
(७) माह्लाभिन्नाह्वय इति ख०, [illegible]
(८) एतच्छ्लोकार्द्धं क० ग० ङ० च० [illegible]
(९) विवक्षयेति ख० ग० [illegible]
(१०) वाक्यान्वेषामिति [illegible]
(११) विधिदृष्टेनेति क० [illegible]

दृश्यन्ते ब्राह्मणे मन्त्रा एकदेशे प्रदर्शिताः ॥२३॥
जामदग्न्यो यथाप्रिय.[१] स्तौतीया[२]श्चैतरेयके।
आप्रियः सुसमिद्धाय[३] पञ्चमं सूक्तमत्र तु[४] ॥२४॥
एतद्[५]वैश्वदेवी वा अन्त्या चैन्द्राग्न्युपोत्तमे।
ऐन्द्राणि द्वादश चौणीत्युशना[६]यत्र[७] सस्तुतः ॥२५॥
उशनेति तु पादेन सहयद्वामनेन च[८]।
इन्द्राकुत्सेति चैतस्या कुत्सेनेन्द्रः स्तुतः सह ॥२६॥
यत्त्वा सूर्य्येति चार्चीणां पञ्चर्चं[९] कर्म कीर्त्यते।
[१०]चैत्र्यस्त्र्यरुणो राजा अश्वमेध ऋणं च यः ॥२७॥
स्तूयमानाः प्रतीच्याः सुरचिम्वेते क्वचित् क्वचित्।
अनस्वन्तेति सूक्तेऽस्मिन्नाग्नेयेऽचिर्स्रषिः स्वयम् ॥२८॥
दानतुष्टः श्रशमेतावाजयीनिति केचन।

(१) जामदग्न्यास्त्वैवाज्य इति क० घ० च०, यथाप्रीय इति ग०।
(२) स्तोकीया इति ख० ग० ङ० पुस्तकान्तरश्च।
(३) आप्र सुसमिद्धायेति क० ग० घ० च०।
(४) चविस्त्विति ख० ङ० पुस्तकान्तरश्च।
(५) एदम्रगिति क० ग० घ० च०, रोदम्रगिति ख०।
(६) द्वादशान्त्यादीन्युशना इति ङ० पुस्तकान्तरश्च।
(७) त्वत्रेति क० ख० ग० घ० च०।
(८) उशनेति च पादोऽयं संहयद्वा परस्य य इति ख०, परस्य य इयश परस्तय इति ङ० पुस्तकान्तरश्च।
(९) पञ्चर्च इति क० घ० च०।
(१०) चैत्र्यस्त्र्यरुणो राजेत्यादि सार्द्धश्लोक क० ग० घ० च० चिह्नित-पुस्तकेषु न विद्यते।

आगीरथ्येषणाञ्चेभ्यो अग्निं प्रति च दृश्यते ॥२९॥
अयुतञ्च गवां चौणि शतान्यथ च विंशतिः।
सौवर्णशकटं गोभ्यां त्र्यरुणोऽदान्नृपोऽत्रये ॥३०॥
अश्वमेधशतं चोष्ट्रांस्त्रसदस्युर्धनं बहु।
राज्ञः प्रति च तत्सूक्तं बभाष इति केचन ॥३१॥
आत्मा हितात्मने[1] दद्यादयदौनृपतेर्ऋषिः।
अत्रेः सुतस्तुविं बभ्रुमार्त्विज्याय च्चणश्च यः ॥३२॥
सहस्रदक्षिणे सोमे वव्रे तं सोऽययाजयत्।
ददौ तदौशनो राजा सहस्राणि शतानि च ॥३३॥
तस्मै चत्वारि चत्वारि महावीरञ्च काञ्चनम्।
प्रवर्ग्येषु महावीराः सौवर्णास्तस्य चाभवन् ॥३४॥
प्रतिरुद्ध ऋषिर्गच्छन् मध्यमेनाग्निना पथि।
पृष्ट इन्द्रेण चाचख्यौ भद्रं चतस्रभिश्च तत् ॥३५॥
कोनुवान् वैश्वदेवानि एकादश[2] पराण्यतः[3]।
मारुतानि दश प्रेति इलाभीत्यृचि तु स्तुता[4] ॥३६॥
द्वितीययान्यया स्तुतः सविता शौनकोऽब्रवीत्[5]।
उपेति बार्हस्पत्यस्तृचो यो मारुत्युगुत्तरा ॥३७॥

---

(१) आत्मह्रितात्मने इति पाठः सङ्गतः।
(२) कोनुवांश्च वैश्वदेवान्येकादशेति क०।
(३) त्विति ङ० पुस्तकान्तरञ्च।
(४) प्रेतीळाभीत्युचि तु संस्तुतेति म, इति ख० ङ० पुस्तकान्तरञ्च।
(५) श्लोकार्द्धमेतत् क० ग० घ० च० पु न दृश्यते।

दृश्यन्ते ब्राह्मणे मन्त्रा एकदेशे प्रदर्शिताः ॥२३॥
जामदग्न्यो यथाप्रिय.[1] स्तौतीया[2]स्वैतरेयके।
आप्रिय. सुसमिद्धाय[3] पञ्चमं सूक्तमत्र तु[4] ॥२४॥
एतद्[5]वैश्वदेवी वा अन्त्या चैन्द्राग्न्युपोत्तमे।
ऐन्द्राणि द्वादश त्रीणीत्युशना[6]यत्र[7] संस्तुतः ॥२५॥
उशनेति तु पादेन सहयद्दामनेन च[8]।
इन्द्राकुत्सेति चैतस्या कुत्सेनेन्द्रः स्तुत सह ॥२६॥
यत्वा सूर्येति चाचीणा पञ्चर्चे[9] कर्म कीर्त्यते।
[10]त्रैवृष्णस्त्र्यरुणो राजा अश्वमेध ऋणं च यः ॥२७॥
स्तूयमानाः प्रतीच्याः स्युरचिर्भिरेते क्वचित् क्वचित्।
अनस्वन्तेति सूक्तेऽस्मिन्नाग्नेयेऽचिर्ऋषिः स्वयम् ॥२८॥
दानतुष्टः शशमेतावाचजर्पीनिति केचन।

(१) जामदग्नास्तथैवाज्य इति क॰ घ॰ च॰, यथाप्रीय इति ग॰।
(२) स्तोकीया इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(३) आप्र सुसमिद्धायेति क॰ ग॰ घ॰ च॰।
(४) ऋचिस्त्विति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) एदस्रगिति क॰ ग॰ घ॰ च॰, रौदस्रगिति ख॰।
(६) द्वादशान्त्यादीन्युशना इति ङ॰ पुस्तकान्तरञ्च।
(७) त्वत्रेति क॰ ख॰ ग॰ घ॰ च॰।
(८) उशनेति च पादोऽयं सहयद्दा परश्च यः इति ख॰, परश्च य इत्यत्र परस्तय इति ङ॰ पुस्तकान्तरञ्च।
(९) पञ्चर्चं इति क॰ घ॰ च॰।
(१०) त्रैवृष्णस्त्र्यरुणो राजेत्यादि सार्द्धाष्टश्लोका क॰ ग॰ घ॰ च॰ चिह्नित पुस्तकेषु न विद्यते।

आग्नीरध्येषणाद्वेभ्यो अग्निं प्रति च दृश्यते ॥१९॥
अयुतञ्च गवां त्रीणि शतान्यथ च विंशतिः ।
सौवर्णशकटं गोभ्यां त्र्यरुणोऽदान्नृपोऽत्रये ॥२०॥
अश्वमेधश्च चोष्ट्रांस्त्रसदस्युर्धनं बहु ।
राज्ञः प्रति च तत्सूक्तं बभाष इति केचन ॥२१॥
आत्मा हितात्मने[१] दद्याद्यद्दौर्नृपतेर्ऋषिः ।
अत्रेः सुतस्त्वपि बभ्रुमार्त्त्विज्याय ऋणञ्च यः ॥२२॥
सहस्रदक्षिणे सोमे वव्रे तु सोऽप्ययाजयत् ।
ददौ तदौशनो राजा सहस्राणि शतानि च ॥२३॥
तस्मै चत्वारि चत्वारि महावीरश्च काञ्चनम् ।
प्रवर्ग्येषु महावीराः सौवर्णास्तस्य चाभवन् ॥२४॥
प्रतिगृह्य महर्षिर्गच्छन् मध्यमेनाग्निना पथि ।
पृष्ट इन्द्रेण चाचख्यौ भङ्क्त चतसृभिश्च तत् ॥२५॥
कौनुवान् वैश्वदेवानि एकादश[२] पराण्यत.[३] ।
मारुतानि दश प्रेति इत्याभीत्यृचि तु सुता[४] ॥२६॥
यान्यया सुतः सविता शौनकोऽब्रवीत्[५] ।
वार्हस्पत्यस्तृचो यो मारुत्यृगुत्तरा ॥२७॥

राजर्षिरभवद्दार्भ्यो रथवीति[क]रिति श्रुतः[१]।
स यक्ष्यमाणो राजर्षिरभिगम्य प्रसाद्य च ॥४८॥
आत्मानं कार्य्यमर्थं[२]च ख्यापयन् प्राञ्जलिः स्थितः।
अवृणीतर्षिमात्रेयमार्त्विज्यायार्चनानसम्[ख] ॥५०॥
स सपुत्रोऽभ्यगच्छत्तं राजानं यज्ञसिद्धये।
श्यावाश्व[ग]स्त्वात्रिपुत्रस्य पुत्रः खल्वर्चनानसः ॥५१॥
साङ्गोपाङ्गान् सर्व्ववेदान् यः पित्राध्यापितो मुदा।
अर्चनानाः सपुत्रोऽथ गत्वा नृपमयाजयत्[३]।
यज्ञे च विततेऽपश्यद्राजपुत्रीं यशस्विनीम् ॥५२॥
स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत्।
श्यावाश्वस्य च तस्यां वै सक्तमासीत्तदा मनः[४] ॥५३॥
संयुज्यस्व मया राजन्निति याज्यस्य सोऽब्रवीत्।
श्यावाश्वाय सुतां दित्सुर्महिषीं स्वां नृपोऽब्रवीत् ॥५४॥
किं ते पुत्रीमहं कन्यां श्यावाश्वाय ददामि हि।
अत्रिपुत्रो दुर्बलो हि जामाता त्वावयोरिति ॥५५॥
राजानमब्रवीत् सापि नृपर्षिकुलजा ह्यदम्।

(१) श्रुतिरिति ड॰ पुस्तकान्तरस्थ।
(२) कार्य्यवन्तमिति ड॰ पुस्तकान्तरस्थ।
(३) श्यावाश्वस्त्वात्रिपुत्रस्येति सार्द्धकश्लोकः क॰ ख॰ घ॰ चिह्नितपुस्तकेषु नोपलभ्यते।
(४) एतच्छ्लोकार्द्धं क॰ ख॰ घ॰ चिह्नितपुस्तकेषु न दृश्यते।

(क) ऋ॰ ५, ६१, १८। (ख) ऋ॰ ५, ६४, ७। (ग) ऋ॰ ५, ६१, ५।

नानृषिर्नो हि जामाता नैष मन्त्रान् हि दृष्टवान् ॥५६॥
ऋषये दीयतां कन्या चेदस्रो वा भवेत्तथा।
ऋषिं मन्त्रदृशं वेदपितरं मन्यते यतः[१] ॥५७॥
प्रत्याचष्टे स[२] तं राजा सह सम्मन्त्र्य भार्य्यया।
अनृषिर्नो न[३] जामाता कश्चिद्भवितुमर्हति ॥५८॥
प्रत्याख्यात ऋषिस्तेन वृत्ते यज्ञे न्यवर्त्तत।
श्यावाश्वस्य तु कन्यायां मनो नैव न्यवर्त्तत[४] ॥५९॥
ततः स्तुतौ[५] निवर्त्याशु तावेतावभिजग्मतुः[६]।
शशीयसी[क][७] तरन्त[ख]श्च पुरुमीढ[ग][८]श्च पार्थिवम्[९] ॥६०॥
तरन्तपुरुमीढौ[१०] तु राजानौ वै ददर्शतुः[११]।
ताभ्यान्तौ चक्रतुः पूजामृषिभ्यां नृपती[१२] स्वयम् ॥६१॥

---

(१) श्यावाश्वाय सुता दित्सुरित्यादिसार्द्धश्लोकत्रयं क॰ ग॰ घ॰ च॰-चिह्नितपुस्तकेषु नेष्यते।
(२) प्रत्योचत्तथेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(३) नैवेति ग॰।
(४) न स्म निवर्त्तते इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) ततस्तौ त्विति क॰ ग॰ घ॰ च॰।
(६) तत स्तुतौ निवर्त्तेत उभावेवाभिजग्मतुरिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(७) शशीयसीति ङ॰ पुस्तकान्तरञ्च।
(८) पुरुमीढमिति ङ॰।
(९) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितं।
(१०) तरन्तपुरुमीढाविति ङ॰ पुस्तकान्तरञ्च।
(११) ददर्शिनाविति क॰ घ॰ च॰।
(१२) तु पतिरिति क॰ घ॰ च॰।

---

(क) ऋ॰ ५, ६१, ६। (ख) ऋ॰ १, १०५, ११। (ग) ऋ॰ ८, ७१, १४।

राजर्षिरभवद्दार्भ्यो रथवीति[क]रिति श्रुतः[१] ।
स यक्ष्यमाणो राजर्षिरभिगम्य प्रसाद्य च ॥४८॥
आत्मानं कार्य्यमर्थ[२]ञ्च ख्यापयन् प्राञ्जलिः स्थितः ।
अवृणीतर्षिमात्रेयमार्त्विज्यायार्चनानसम्[ख] ॥५०॥
स सपुत्रोऽभ्यगच्छत्तं राजानं यज्ञसिद्धये ।
श्यावाश्व[ग]श्चात्रिपुत्रस्य पुत्रः खल्वर्चनानसः ॥५१॥
साङ्गोपाङ्गान् सर्व्ववेदान् यः पित्राध्यापितो मुदा ।
अर्चनानाः सपुत्रोऽथ गत्वा नृपमयाजयत्[३] ।
यज्ञे च विततेऽपश्यद्राजपुत्रीं यशस्विनीम् ॥५२॥
स्नुषा मे राजपुत्री स्यादिति तस्य मनोऽभवत् ।
श्यावाश्वस्य च तस्यां वै सक्तमासीत्तदा मनः[४] ॥५३॥
संयुज्यस्व मया राजन्निति याज्यञ्च सोऽब्रवीत् ।
श्यावाश्वाय सुतां दित्सुर्महिषीं स्वां नृपोऽब्रवीत् ॥५४॥
किं ते पुत्रीमहं कन्यां श्यावाश्वाय ददामि हि ।
अत्रिपुत्रो दुर्बलो हि जामाता त्वावयोरिति ॥५५॥
राजानमब्रवीत् सापि नृपर्षिकुलजा ह्यहम् ।

---

(१) श्रुतिरिति ङ॰ पुस्तकान्तरस्थ ।

(२) कार्य्यवन्तमिति ङ॰ पुस्तकान्तरस्थ ।

(३) श्यावाश्वश्चात्रिपुत्रस्येति सार्द्धैकश्लोकः क॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते ।

(४) एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।

---

(क) ऋ॰ ५, ६१, १९ । (ख) ऋ॰ ५, ६४, ७ । (ग) ऋ॰ ५, ६१, ५ ।

नानृषिर्नो हि जामाता नैष मन्त्रान् हि दृष्टवान् ॥५६॥
ऋषये दीयतां कन्या चेदर्षी वा भवेत्तया।
ऋषिं मन्त्रदृशं वेदपितरं मन्यते यतः[१] ॥५७॥
प्रत्याचष्टे स[२] तं राजा सह सम्मन्त्र्य भार्य्यया।
अनृषिर्नो न[३] जामाता कश्चिद्भवितुमर्हति ॥५८॥
प्रत्याख्यात ऋषिस्तेन वृत्ते यज्ञे न्यवर्त्तत।
श्यावाश्वस्य तु कन्यायां मनो नैव न्यवर्त्तत[४] ॥५९॥
ततः सुतौ[५] निवर्त्याशु तावेतावभिजग्मतुः[६]।
प्रशीयसी[क][७] तरन्त[ख]श्च पुरुमीळ्ह[ग][८]श्च पार्थिवम्[९] ॥६०॥
तरन्तपुरुमीळ्हौ[१०] तु राजानौ वै ददर्श्यूषी[११]।
ताभ्यान्तौ चक्रतुः पूजामृषिभ्यां नृपती[१२] स्वयम् ॥६१॥

---

(१) श्यावाश्वाय सुतां दित्सुरित्यादिसार्द्धश्लोकत्रयं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(२) प्राबोचत्तथेति ख० ङ० पुस्तकान्तरञ्च।
(३) नैवेति ग०।
(४) न स्म निवर्त्तते इति ख० ङ० पुस्तकान्तरञ्च।
(५) ततस्तौ त्विति क० ग० घ० च०।
(६) ततः सुतौ निवर्त्तेत उभावेवाभिजग्मतुरिति ख० ङ० पुस्तकान्तरञ्च।
(७) प्रसीयसीति ङ० पुस्तकान्तरञ्च।
(८) पुरुमीढमिति ङ०।
(९) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न पठितं।
(१०) तरन्तपुरुमीढाविति ङ० पुस्तकान्तरञ्च।
(११) ददृश्विनाविति क० घ० च०।
(१२) तु पतिरिति क० घ० च०।

---

(क) ऋ० ५, ६१, ६। (ख) ऋ० ९, १०५, ११। (ग) ऋ० ८, ७१, १४।

ऋषिपुत्रं महिष्याय दर्शयामास तं[१]) नृपः ।
तरन्तानुमतेनैव[२] प्रादाद्बहुविधं वसु ॥६२॥
अजाविकं गवाश्वञ्च श्यावाश्वाय प्रणीयसी[३] ।
अत्रिं[४] याज्यार्चितौ गत्वा पितापुत्रौ समाश्रमम् ॥६३॥
अभ्यवादयतामत्रिं[५] महर्षिं दीप्ततेजसम् ।
श्यावाश्वस्य मनस्यासीन्मन्त्रस्यादर्शनादहम् ॥६४॥
न लब्धवानिमां कन्यां हन्त सर्व्वाङ्गशोभनाम् ।
अप्यहं मन्त्रदर्शी स्यां भवेद्धर्षो महान् मम ॥६५॥
इत्यरण्ये चिन्तयतः प्रादुरासीन्मरुद्गणः[६] ।
ददर्श संस्थितान् पार्श्वे तुल्यरूपान्महात्मनः[७] ॥६६॥
समानवयसश्चैव[८] मरुतो रुक्मवक्षसः ।
तांस्तुल्यवयसो दृष्ट्वा देवान् पुरुषविग्रहान् ॥६७॥
श्यावाश्वो विस्मितोऽपृच्छत्केष्वेति[९] मरुतस्तदा ।

(१) वै इति ख० घ० ।
(२) तरन्तानुमता चैवेति क० ग० घ० च० ।
(३) प्रणीयसीति घ० पुस्तकान्तरञ्च ।
(४) तौ त्विति पाठः सङ्गतः ।
(५) अभ्यवादयतां तत्तमिति ङ० पुस्तकान्तरञ्च ।
(६) अत्रिं याज्यार्चितौ गत्वेत्यादि प्रादुरासीन्मरुद्गणः इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(७) तुल्यरूपानिवात्मनः इति क० ख० ग० घ० च० ।
(८) चैवमिति घ० पुस्तकान्तरञ्च ।
(९) के स्थेति पाठः समीचीनः । केष्ठेतीति क०, कोष्ठेतीति घ० ।

ततस्तु मरुतो देवानृषिस्तानन्वबुध्यत[१] ॥६८॥
य ईं वहन्त इत्यृग्भिः षड्भि[२] स्तुष्टाव तांस्तथा।
अतिक्रमं हितमृषिर्मेने विपुलमात्मनः ॥६९॥
यत्र[३] दृष्ट्वैव तुष्टाव यच्च[४] केष्ठेति[५] पृष्टवान्।
स्तुताः स्तुत्यानया प्रीता गच्छन्तः पृश्निमातरः[क] ॥७०॥
अवमुच्य स्ववक्षोभ्यो[६] रुक्मं तस्मै तदा ददुः।
मरुत्सु तु प्रयातेषु श्यावाश्वस्तु महायशाः[७] ॥७१॥
रथवीतेर्दुहितरमगच्छन्मनसा तदा।
स सद्य ऋषिरात्मानं विवक्षू रथवीतये[८] ॥७२॥
एतं मे स्तोममित्यृग्भ्यां[९] दौत्ये[१०] रात्रीं न्ययोजयत्।
रथवीतिं तपस्यन्तं[११] सम्प्रेक्ष्यार्षेण चक्षुषा ॥७३॥

---

(१) रुद्रसूनूनबुध्यतेति क॰ ग॰ घ॰ च॰।
(२) बुद्धेति क॰ ग॰ घ॰ च॰।
(३) यान्न इति क॰ घ॰ च॰।
(४) यास्वेति क॰ ग॰ घ॰ च॰।
(५) केष्टेतीति क॰, केष्ठेतीति ङ॰।
(६) व्यमुच्यत स्वकण्ठेभ्यः इति ख॰, व्यामुच्यते स्वकण्ठेभ्यः इति ङ॰।
(७) महातपाः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(८) प्रवक्ष्यन्रथवीतये इति क॰ ग॰ घ॰ च॰।
(९) इत्याभ्यामिति क॰ ग॰ घ॰ च॰।
(१०) दूत्ये इति ख॰ पुस्तकान्तरञ्च।
(११) रथवीतिमपश्यन्तीमिति ख॰ ङ॰।

---

(क) ऋ॰ १, २३, १०।

रम्ये हिमवतः पृष्ठ एषव्वेतीति चाब्रवीत्।
ऋषेर्नियोगमाज्ञाय देव्या राज्ञा प्रचोदितः।
आदाय कन्यां तां दार्भ्य उपेयायार्चनानसम् ॥७४॥
पादौ तस्योपसङ्गृह्य स्थितः[१] प्रह्वः कृताञ्जलिः।
रथवीतिरहं दार्भ्य इति नाम शशंस च ॥७५॥
मया सङ्गति[२] मिच्छन्तं त्वां प्रत्याचक्षि यत्पुरा।
तत् क्षमस्व नमस्तेऽस्तु मा च मे भगवन् क्रुधाः[३] ॥७६॥
ऋषेः पुत्रः स्वयमृषिः[४] पितासि भगवन्नृषेः।
हन्त प्रतिगृहाणेमां स्नुषामित्येवमब्रवीत्[५] ॥७७॥
पाद्यार्घ्यमधुपर्कैश्च पूजयित्वाथ त[६] नृपः।
शुक्लमश्वशतं दत्त्वा अनुजज्ञे गृहान् प्रति ॥७८॥
शशीयसीं[७] तरन्तञ्च पुरुमीळ्ह[८]ञ्च पार्थिवम्।
षड्भिः सनदिति स्तुत्वा जगामर्षिरपि स्वयम्[९] ॥७९॥

---

(१) स्थित्वेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(२) संयोगमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(३) क्रुध॰ इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(४) चर्षिरिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) स्नुषान्तेऽस्त्विति चाब्रवीदिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) चार्चनाना स्वयमिति क॰ घ॰ च॰।
(७) शसीयसीमिति ङ॰ पुस्तकान्तरञ्च।
(८) पुरुमीढमिति ङ॰ पुस्तकान्तरञ्च।
(९) स्वयमिति क॰ ग॰ घ॰ च॰।

स्रवतामपि गर्भाणां दृष्टं तदनुमन्त्रणम् ।
भाववृत्तं तु तत्तस्यास्तयारूपं हि दृश्यते ॥८५॥
जरायुर्गर्भयव्द्राभ्यामेतद्रूपं हि दृश्यते[१] ।
मह्ये उपस्थे[२] सावित्रं युञ्जतेच्छावदः[३] स्तुतः ॥८६॥
पर्जन्यो बलिति त्वस्मिन्[४] पृथिवी मध्यमा तु[५]वाक्[६] ।
श्रद्धा नो देवसवितरियं दुःस्वप्ननाशिनी[७] ॥८७॥
वारुणन्तु प्रसम्राजे षड्भैन्द्राग्नमुत्तरम्[८] ।
विष्णुं न्यङ्ग[९]म्परस्मेति मारुतं सूक्तमुत्तरम्[१०] ॥८८॥
एतया मरुदाख्यातं द्यौर्नैन्द्रे प्रतिपूर्व्वकम्[११] ।

---

(१) स्रवतामपि गर्भाणामित्यादिसार्द्धैकश्लोकः क॰ ग॰ घ॰ च॰ चिह्नित-पुस्तकेषु नापलभ्यत ।
(२) मह्योपस्थेतीति क॰ घ॰ च॰ ।
(३) सावित्रे युञ्जतेच्छेति वै इति क॰ ग॰ घ॰ च॰ ।
(४) पर्ज्जन्यस्तु बलित्येतीति ङ॰ पुस्तकान्तरञ्च ।
(५) न्विति ग॰ ।
(६) स्तुतेति ङ॰ पुस्तकान्तरञ्च ।
(७) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते ।
(८) उत्तरमित्यत्र उत्तममिति क॰, इन्द्राग्नैन्द्राग्नमुच्यते इति ख॰, मिन्द्राग्नैन्द्राग्नमुच्यते इति ङ॰ पुस्तकान्तरञ्च ।
(९) विष्णुं चिङ्गमिति ङ॰ पुस्तकान्तरञ्च ।
(१०) उत्तममिति ख॰ ।
(११) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते ।

श्रीसूक्तमाशीर्वादस्तु[१] स्त्रीपुत्राणां पराणि तु[२] ॥८९॥
तस्यादा[३]लक्ष्म्यपनुद्[४] मग्निस्तत्र[५] निपातभाक्।
प्रजावान् जीवपुत्रो[६] वा गर्भकर्मणि संस्तुतौ ॥९०॥
नानारूपाः पयस्विन्यः[७] संस्रवन्तीति संस्तुताः[८]।
आशीर्वादेषु संज्ञासु कर्मसंस्थास्तु देवताः[९] ॥९१॥
निपातभाग् लिङ्गवाक्यात्[१०] परीक्षेतेह मन्त्रवित्।
मन्त्रप्रयोगमन्त्रयोः[११] प्रयोगो[१२] बलवत्तरः ॥९२॥

---

(१) आशीर्वादो स्यादिति ख०, आशीर्वादास्येति ङ० पुस्तकान्तरञ्च।
(२) श्रीपुत्राणां पराणि षट् इति क० घ० च०, षट् इति ग०, श्रीः पुत्राणां पराश्च षट् इति ङ० पुस्तकान्तरञ्च।
(३) तस्यादेति क० घ० च०।
(४) लक्ष्म्यपनिर्णोदः इति क० घ० च०, स्यादालक्ष्मीं प्रवेर्णोदे इति ख०, अलक्ष्म्यपनिर्णोदे इति ङ० पुस्तकान्तरञ्च।
(५) स्तत्रेति ख० ङ०।
(६) प्रजावज्जीवपुत्रः इति क० ख० ग० घ० च०, प्रजावान् जीवपुत्रा इति ङ०।
(७) पयास्विन्यः इति ख० ग०।
(८) संस्तुताविति ङ०।
(९) कर्मसंस्था तु देवतेति ख०।
(१०) लिङ्गवाक्येति ख० ग०।
(११) मन्त्रप्रयोगमन्त्राणामिति ग०।
(१२) प्रयोगे इति ग०।

विधेस्तयोः परीक्षा[१] स्यान्मन्त्राः स्युरभिधायकाः[२] ।
तस्मात्तेन विसंवादो मन्त्राणां तद्गतानि तु ॥८३॥
गुणाभिधायकानि स्युः सविज्ञानपदानि तु ।
मन्त्रेषु गुणभूतेषु प्रधानेषु च कर्मसु ॥८४॥
प्रधानगुणभूताः स्युर्देवता इति गम्यते ।
त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः ॥८५॥
आहरत्सहितः साध्यैर्विश्वैर्देवैः सहेति च ।
सत्र वाग्दीक्षणीयायामाजगामाशरीरिणी[३] ॥८६॥
तां दृष्ट्वा युगपत्तत्र कस्याय वरुणस्य च ।
शुक्रं चस्कन्द तद्वाय्वामग्नौ प्रास्तं[४] यदृच्छया ॥८७॥
ततोऽर्चिर्भ्यो भृगुर्जज्ञे अङ्गारेभ्योऽङ्गिरा(क)[५] ऋषिः ।
प्रजापतिस्तु तौ दृष्ट्वा दृष्टा वागभ्यभाषत ॥८८॥
आभ्यामृषिस्तृतीयोऽपि भवेदत्रैव मे सुतः ।
प्रजापतिस्तथेत्युक्तः प्रत्यभाषत भारतीम् ॥८९॥
ऋषिरत्रिस्ततो जज्ञे सूर्य्यानलसमद्युतिः ।
योऽङ्गारेभ्य ऋषिर्जज्ञे तस्य पुत्रो बृहस्पतिः ॥१००॥

(१) परीक्षः इति ग० ।
(२) अभिधानकाः इति ख०, अभिधायिकाः इति ग० ।
(३) शरीरिणीति मुद्रः पाठः ।
(४) प्राश्यमिति ख०, प्रास्तेति ग० ।
(५) अङ्गारत्वाङ्गिरा इति ख०, यङ्गारेभ्यङ्गिरा इति ग० ।

(क) ऋ० १, ३१, १ ।

बृहस्पतेर्भरद्वाजो विदधीति[१] य उच्यते[२] ।
मरुत्वाशीद्गुरुर्यस्य[३] स एवाङ्गिरसो नपात्[क] ॥१०१॥
सपुत्त्रस्य तु तस्येदं[४] मण्डलं षष्ठमुच्यते ।
त्वं ह्यग्न इति तत्रादावाग्नेयानि त्रयोदश ॥१०२॥
सूक्तानि त्रीणि मूर्द्धानमग्नेर्वैश्वानरस्य तु ।
एकान्नविंशतिस्त्वैव[५] पिबेन्त्वैन्द्राण्य[६]तः परम् ॥१०३॥
अग्ने सचे यदित्यस्यां द्वौ देवौ तु[७] निपातितौ ।
प्रोतये नूम[८] इत्येते वैश्वदेव्यावृचौ तु ते[९] ॥१०४॥
ऋग्द्वितीया पदस्यान्त्यमैन्द्रमेति[१०] गवां स्तुतिः ।
आयस्तायाय[ख] इत्यस्यां वायुरिन्द्रश्च संस्तुतौ[११] ॥१०५॥
इन्द्रः प्राधान्यतो वात्र स्तुतो वायुर्निपातभाक् ।

---

(१) विदधीतीति ङ० ।
(२) प्रजावान् जीवपुत्त्रो वा इत्यादि विदधीति य उच्यते इत्यन्तपाठः क० ग० च० चिह्नितपुस्तकेषु नापद्यत ।
(३) भुवन्यस्येति क० ग० च०, गुरोर्यस्येति ख० ग० ।
(४) ससपुत्त्रस्य तस्यैतदिति क० ग० घ० च० ।
(५) एकाग्निर्त्रिंशदेवात्रेति ख०, एकान्नत्रिंशदेवात्रेति ङ० । एकान्नविंश-तिरिति भवितुमर्हति ।
(६) पिबन्त्वैन्द्राण्यीति पाठः शुद्धः ।
(७) देवौ याविति क० ग० घ० च० ।
(८) नम इति क० घ० च० ।
(९) स्तुते इति ङ० ।
(१०) येतीति ग० ।
(११) इन्द्रवायू सह स्तुताविति घ० पुस्तकान्तरस्थ ।

---

(क) ऋ० १, १४३, १ । (ख) ऋ० ६, २७, ३ ।

अयं देवस्तृचं सौम्यमैन्द्रमेके प्रचक्षते[१] ॥१०६॥
शरीरं चक्षुरित्यस्यां त्वचोऽधीति[२] त्वचोः[क] स्तुतिः[३]।
पितरं स्तौति शंयु[ख]श्च त्वचस्यान्ते पदे स्वयम्[४] ॥१०७॥
स्वादु[ग]ष्किलायमित्येताः पञ्चर्चः सौम्य एव वा[५]।
इन्द्रः प्रधानतो वात्र स्तुतः सोमो निपातभाक् ॥१०८॥
इन्द्रस्यैन्द्रनिपातोऽयं सूयन्ते ह्यैतरेयके[६]।
अगव्यूति[घ] स्तौति देवान् पादौ भूमिमथोत्तरः ॥१०९॥
बृहस्पतिं तृतीयोऽस्तौत्[७] त्विन्द्र[८]मेवोत्तमं पदम्।
ऋषिस्तु तौ तथेत्युक्त्वा पायुं[ङ] पुत्त्रमभाषत ॥११०॥
अथर्वणौयौ शत्रूणां कुरुस्वैतौ[९] नृपाविति।
पितरं स तथेत्युक्त्वा युद्धोपकरणं तयोः ॥१११॥
जीमूतस्येति[१०] सूक्तेन पृथक्त्वेनान्वमन्त्रयत्।

(१) इन्द्रः प्राधान्यतो वात्रेति श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(२) अधीतिरिति विसर्गयुक्तपाठः शुद्धः।
(३) य आनयदिति तस्य त्वचोऽधीति त्वचस्तुतिरिति क० ग० घ० च०।
(४) सूक्तस्यान्ते पदे स्वकमिति ख० ङ० पुस्तकान्तरञ्च।
(५) इति तु सौम्यः पञ्चर्च उत्तरः इति क० ग० घ०।
(६) इन्द्रः प्रधानतो वाचेत्यादि सूयन्ते ह्यैतरेयके इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते। सूयते इति शुद्धः पाठः।
(७) तृतीयस्त्विति क० ङ० पुस्तकान्तरञ्च।
(८) त्विन्द्रमिति पाठः साधुः।
(९) कुरु पुत्रेति ख० पुस्तकान्तरञ्च।
(१०) जीमूतीयेनेति क० घ० च०, जीमूतस्येवेति ग०।

(क) ऋ० ६, ४५, ३३। (ख) ऋ० १, ३४, ६। (ग) ऋ० ६, ४४, २१।
(घ) ऋ० ६, ४७, २०। (ङ) ऋ० २, २, ४।

प्रथमा लक्ष्य सूक्तस्य योद्धारं स्तौति वर्म्मिणम् ॥११२॥
धनुः स्तौति[१] द्वितीया तु तृतीया ज्याभिमन्त्रिणी[२]।
स्तौति चार्त्नी[क] चतुर्थी च[३]गिषुधिं स्तौति पञ्चमी ॥११३॥
अर्द्धेन[४] सारथिं षष्ठ्या रश्मयोऽर्द्धेन संस्तुताः।
अश्वांस्तु सप्तमी स्तौति आयुधागारमष्टमी ॥११४॥
नवमी रथगोपांस्तु दशमी रणदेवताः।
इषुमेकादशी[५] स्तौति द्वादशी कवचस्तुतिः ॥११५॥
त्रयोदशी कशां स्तौति हस्तत्राणं चतुर्दशी।
प्रथमे पञ्चदश्यास्तु पादे दिग्ध[६] इषुः स्तुतः[७] ॥११६॥
अयोमुखी द्वितीये तु अर्द्धऽस्त्वं[८] वारुणं परम्[९]।
षोड़श्यां[१०] लक्ष्य सूक्तस्य धनुर्मुक्त इषुः स्तुतः ॥११७॥
सप्तदश्यां तु युद्धादेः[११]कवचस्य च बन्धनं[१२]।

---

(१) धनुश्चेति क॰ घ॰ च॰।
(२) ज्यानिमन्त्रिणीति क॰ घ॰ च॰।
(३) स्तौत्युगार्त्नी चतुर्थी चेति क॰ ग॰ घ॰ च॰।
(४) धार्येनेति क॰ घ॰ च॰।
(५) इषुधिश्चैकादशीति क॰ घ॰ च॰, इषुश्चैकादशीति ग॰।
(६) दिग्धः इति ग॰।
(७) इषुस्तुतः इति ग॰ ङ॰।
(८) चार्द्धर्चमिति ख॰।
(९) परे इति ख॰।
(१०) षोड़श्येति क॰ ग॰ घ॰ च॰।
(११) युद्धदेश्येति क॰ घ॰ च॰, योद्धादेरिति ख॰।
(१२) बध्यतः इति क ग घ॰ च॰।

---

(क) ऋ॰ ६, ७५, ४।

स्तुतिरष्टादशी ज्ञेया युयुत्सोर्द्दैव्युगुत्तमा[१] ॥११८॥
आग्नास्ते चोत्तमे पादे द्युवि[२]रात्मन आशिषः।
सूक्तेनानेन तु स्तुत्वा सङ्ग्रामाङ्गान्यृषिस्तयोः ॥११९॥
ततः[३] प्रस्थापयामास पुनर्वारशिखान्[४] प्रति।
एतद्युक्ते चतस्त्रभी राज्ञोः साहाय्यकाङ्क्षया ॥१२०॥
भरद्वाजोऽभितुष्टाव प्रीतस्तेन पुरन्दरः।
अभ्यावर्त्तिनमासाद्य हर्य्युपीयानदीतटे ॥१२१॥
वधितश्चायमानेन[क] जघानैतान् शचीपतिः[५]।
एवं[६] वारशिखा[७]ञ्जित्वा तावभ्यावर्त्ति[८]सार्ञ्जयौ[९] ॥१२२॥
भरद्वाजाय गुरवे ददतुर्विविधं वसु।
भरद्वाजश्च गर्गश्च दृष्टाविन्द्रेण वै पथि ॥१२३॥
द्वौ च[१०] प्रस्तोक[ग] इत्याभिर्दानं तस्मै[१०] प्रशंसतुः।

(१) स्तुतिरुत्तमेति क॰ ग॰ घ॰ च॰।
(२) ऋषिरिति ङ॰।
(३) तयोरिति क॰ घ॰ च॰।
(४) वारिशिखानिति ग॰।
(५) एतद्युक्ते चतस्रभिरित्यादि जघानैतान् शचीपतिरित्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।
(६) तौ त्विति क॰ ग॰ घ॰ च॰।
(७) वारिशिखानिति ग॰।
(८) ततोऽभ्यावर्त्तीति क॰ ग॰ घ॰ च॰।
(९) इयानिति क॰ ग॰ घ॰ च॰।
(१०) तद्दे इति क॰ ग॰ घ॰ च॰।

(क) ऋ॰ ६, २७, ८। (ख) ऋ॰ ६, ४७, २५। (ग) ऋ॰ ६, ४७, २२।

(१)प्रसङ्गादिह(२) याः सूक्ते देवताः परिकीर्त्तिताः ॥१२४॥
ता एव सूक्तभाजस्तु मेने राथीतरीसुतः(३)।
प्राजापत्यो मरीचिर्हि मारीचः कश्यपोऽभवत्(४) ॥१२५॥
तस्य देव्योऽभवञ्जाया(५) दाक्षायण्यस्त्रयोदश।
अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः(६)॥१२६॥
क्रोधावशा वरिष्ठा च सुरभिर्विनता तथा।
कद्रुश्चैवेति दुहितॄः कश्यपाय ददौ स च(७) ॥१२७॥
तासु देवासुराश्चैव गन्धर्वोरगराक्षसाः।
वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च जातयः ॥१२८॥
तत्रैका त्वदितिर्देवी द्वादशाजनयत्(८) सुतान्।
भगश्चैवार्य्यमांश(क)श्च मित्रो वरुण एव च ॥१२९॥

---

(१) ख॰ छ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च, प्रसङ्गादिह याः सूक्ते इति श्लोकार्द्धात् प्राक्,—

ऋषिरप्यभितुष्टाव दानं तत्र च तस्य तु।
ऋचैकया द्वयोर्वापि दत्तं सङ्कीर्त्तयन् स्वयम्॥

इत्यधिकं पठितम्।

(२) प्रसङ्गात्त्विहेति क॰ ग॰ घ॰ च॰।

(३) राथीतरसुताविति क॰ घ॰ च॰।

(४) मुनिरिति क॰ ग॰ घ॰ च॰।

(५) जाता इति क॰ घ॰ च॰।

(६) विनायिति ख॰।

(७) अदितिरित्यादिसार्द्धैकश्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।

(८) द्वन्द्वशोऽजनयदिति क॰ ग॰ घ॰ च॰।

---

(क) ऋ॰ २. १, ४।

धाता चैव विधाता च विवस्वांश्च महाद्युतिः।
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते[१] ॥१२०॥
द्वन्द्वं तयोस्तु तज्जज्ञे[२] मित्रश्च वरुणश्च ह[३]।
तयोरादित्ययोः सत्रे दृष्ट्वाप्सरसमुर्वशीम् ॥१२१॥
रेतश्चस्कन्द कुम्भे तु[४] न्यपत[५]द्वासतीवरे।
तेनैव तु मुहूर्तेन वीर्यवन्तौ तपस्विनौ ॥१२२॥
अगस्त्यश्च वसिष्ठश्च तत्रर्षी संबभूवतुः।
बहुधा पतिते शुक्रे कलशेऽथ जले स्थले ॥१२३॥
स्थले वसिष्ठस्तु मुनिः सम्भूत ऋषिसत्तमः।
कुम्भे त्वगस्त्यः सम्भूतो जले मत्स्यो महाद्युतिः[६] ॥१२४॥
उदियाय ततोऽगस्त्यः शम्या[क]मात्रो महायशाः[७]।
मानेन सम्मितो यस्मात् तस्मान्मान्य इहोच्यते ॥१२५॥
यद्वा कुम्भाद्दृषिर्जातः कुम्भेनापि हि[८] मीयते।

(१) सप्तश्लोकार्धमात्रसप्तश्लोकार्धश्लोकः ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते।
(२) प्रजज्ञाते इति ङ॰।
(३) मित्रस्य वरुणस्य चेति क॰ ख॰ ग॰ च॰, सहेति ख॰ ग॰।
(४) तत्कुम्भे इति ग॰ ङ॰ पुस्तकान्तरञ्च।
(५) ह्यपतदिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) बहुधा पतिते शुक्रे इत्यादिसार्द्धैकश्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितः।
(७) महातपाः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(८) कुम्भे नावीहेति क॰ घ॰ च॰।

(क) ऋ॰ १, ८१, ४।

(१)प्रसङ्गादिह(२) याः सूक्ते देवताः परिकीर्त्तिताः ॥१२४॥

ता एव सूक्तभाजस्तु मेने राथीतरीसुतः(३)।

प्राजापत्यो मरीचिर्हि मारीचः कश्यपोऽभवत्(४) ॥१२५॥

तस्य देव्योऽभवञ्जाया(५) दाचायण्यस्त्रयोदश।

अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः(६)॥१२६॥

क्रोधावशा वरिष्ठा च सुरभिर्विनता तथा।

कद्रुश्चैवेति दुहितॄः कश्यपाय ददौ स च(७) ॥१२७॥

तासु देवासुराश्चैव गन्धर्वोरगराक्षसाः।

वयांसि च पिशाचाश्च जज्ञिरेऽन्याश्च जातयः॥१२८॥

तत्रैका त्वदितिर्देवी द्वादशाजनयत्(८) सुतान्।

भगश्चैवार्य्यमांश(क)श्च मित्रो वरुण एव च ॥१२९॥

---

(१) ख॰ ङ॰ चिह्नितपुस्तकयोः पुस्तकान्तरे च, प्रसङ्गादिह याः सूक्ते इति श्लोकार्द्धात् प्राक्,—

ऋषिरप्यभितुष्टाव दानं तत्र च तस्य तु।
ऋचैकया दयां चमे दत्तं सङ्कीर्त्तयन् स्वयम्॥

...पठितम्।

(४) चैन्द्रमिति ङ॰ [illegible]

(५) स्तोमभागांस्ततः इति ख॰ ङ॰ पुस्तकान्तरञ्च।

(६) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।

(७) वाषिष्ठाश्च वषिष्ठश्चेति पाठः सङ्गतः। वषिष्ठाश्च वषिष्ठाश्चेति क॰ घ॰, वषिष्ठाश्च वषिष्ठाश्चेति ग॰ घ॰।

(८) सर्व्वमर्म्मसु यज्ञेषु दक्षिणीयतमास्तथेति क॰ घ॰ च॰।

(९) येऽध्यायेति क॰ ग॰ ध॰ च॰।

(१०) वषिष्ठाः सदस्याः स्युस्तु कर्हिचिदिति क॰ ग॰ घ॰ च॰।

अर्हयेद्[१] दक्षिणाभिस्तान् भाल्लवेयी श्रुति[२]स्त्वियम्[३] ।
ऋषिस्तु मैत्रावरुणिः सूक्तैः षोडशभिः परैः ॥१४२॥
तुष्टाव चाग्नि[क]मित्यग्निमाद्यस्तत्र जुषस्व नः[ख] ।
प्राग्नये[ग]ऽथ प्रसम्राजो[घ] द्वितीयं प्राग्नये[ङ] वचम् ॥१४३॥
वैश्वानरीयाण्येतानि[४] त्वे हे[च]न्द्राणि पराण्यतः ।
दश पञ्च च सूक्तानि निपातो मरुतां स्तुतिः ॥१४४॥
नकिः सुदास[छ] इत्यस्यां दानं पैजवनस्य तु ।
वसिष्ठेन चतुर्ऋग्भि[५]र्द्वे नप्तु[ज]रिति कीर्त्तितम् ॥१४५॥
संवादः सूक्तमैन्द्रं[६] वाश्विन्यं तत्तु[७] प्रचक्षते ।
वसिष्ठागस्त्ययोश्च कीर्त्त्यते तनयैः सह ॥१४६॥
इन्द्रेण चैव संवादो महिमा जन्म कर्म्म च ।

---

(१) पूजयेदिति ख० ङ० पुस्तकान्तरञ्च ।
(२) स्तुतिरिति क० घ० च० ।
(३) स्त्वयं भाल्लवी श्रुतिरिति ख० ङ० ।
(४) वैश्वानरीयमित्येतदिति क० घ० च० ।
(५) चतुर्भिस्त्विति क० ग० घ० च० ।
(६) संवादमैन्द्रसूक्तमिति ङ० पुस्तकान्तरञ्च, संवादे सूक्तमैन्द्रे इति ख० ।
(७) वाश्वियं वस्त्विति क० ग० घ० च० ।

(क) ऋ० ७, १, १ । (ख) ऋ० ७, २, १ । (ग) ऋ० ७, ५, १
(घ) ऋ० ७, ६, १ । (ङ) ऋ० ७, १३, १ । (च) ऋ० ७, १८, १
(छ) ऋ० ७, १९, १० । (ज) ऋ० ७, १८, २२ ।

पराणि प्रे(क)ति चत्वारि वैश्वदेवानि यानि(१) तु ॥१४७॥
स्तौत्यृगजा(ख)महिं तच मानो(ग)ऽहिर्बुध्न्य(घ) एव च।
अहिराघ्नन्ति मेघान् स एति वा तेषु मध्यमः॥१४८॥
योऽहिः स बुध्न्यो बुध्नेति सोऽन्तरिक्षेऽभिजायते(२)।
उदुष्य(ङ)सवितुः सूक्तं(३) यच्चो (च)वाजिनदेवताः(४) ॥१४९॥
द्युचो(५)ऽर्द्धर्चस्य पादोऽत्र प्रथमायामृचि स्तुतः(६)।
पादश्चैव तृतीयोऽत्र प्रथमायामृचि स्तुतः(७)॥१५०॥
यथार्द्धर्चो भगसुप(छ)स्तथा नूनं भगो(ज)ऽपि च।
स हि रत्नानि सविता सुवातीति भगः स वा(८)॥१५१॥

---

(१) तथेति ख० छ० पुस्तकान्तरच।
(२) अहिराघ्नन्तीत्यादि सोऽन्तरिक्षेऽभिजायते इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(३) सूक्ते इति ख० छ०।
(४) वाजिनदेवत इति ख० छ० पुस्तकान्तरच।
(५) द्युचः इति ग०।
(६) द्युचोऽर्द्धस्य भागोऽत्र भगसुप इति श्रुतिरिति ख० छ० पुस्तकान्तरच। श्रुतिरित्यत्र स्तुतः इति ग०।
(७) प्रथम्यामहिर्देवतः इति क० ग० घ० च०।
(८) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नास्त्येव।

---

(क) ऋ० ७, ३१, १। (ख) ऋ० ७, ३४, १६। (ग) ऋ० ७, ३४, १७। (घ) ऋ० ७, ३४, १७। (ङ) ऋ० ७, ३८, १। (च) ऋ० ७, ३८, ७। (छ) ऋ० ७, ३८, ६। (ज) ऋ० ७, ४१, ५।

पराणि प्रे[क]ति चत्वारि वैश्वदेवानि यानि[१] तु ॥२४७॥
स्तौत्यृगजा[ख]महिं तव मानो[ग]ऽहिर्बुध्न्य[घ] एव च ।
अहिराहन्ति मेघान् स एति वा तेषु मध्यमः ॥१४८॥
योऽहिः स बुध्न्यो बुध्नेति सोऽन्तरिक्षेऽभिजायते[१] ।
उदुष्य[ङ]सवितुः सूक्तं[२] प्रश्नो [च]वाजिनदेवता.[३] ॥१४९॥
हवो[४]ऽर्द्धर्चस्य पादोऽत्र प्रथमायामृचि स्तुतः[६] ।
पादस्यैव तृतीयोऽत्र प्रथमायामृचि स्तुतः[७] ॥१५०॥
यथार्द्धर्चौ भगमुप[छ]स्तथा नूनं भगो[ज]ऽपि च ।
स हि रत्नानि सविता सुवातीति भगः स वा[८] ॥१५१॥

---

) वत्रेति ख॰ ग॰ पुस्तकान्तरस्थ ।
) अहिराहन्तीत्यादि सोऽन्तरिक्षेऽभिजायते इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते ।
) सूक्ते इति ख॰ ङ॰ ।
) वाजिनदेवत इति ख॰ ङ॰ पुस्तकान्तरस्थ ।
) [illegible] इति [illegible]

---

(१) प्राक्त्वे इति ग॰ ।
(२) वैश्वदेवे तथा प्राक्त्व इत्यादि स्तुतिरित्यन्तपाठः क॰ ख॰ घ॰ चिह्नित-पुस्तकेषु न विद्यते।

---

(क) ऋ॰ ७, ४०, १ ।

# अथ षष्ठोऽध्यायः।

आ मा[क]मिति तु सूक्तेन प्रत्यृचं देवताः स्तुताः।
मित्रावरुणावग्निश्च देवा नद्यस्तथैव च[1] ॥१॥
द्यावादित्यदेवत्यौ रोदस्योः प्रे[ख]ति यस्तृचः।
वास्तोष्पत्यस्ततस्त्र्य[2] प्रस्तापिन्य स्तृचः स्तुताः[3] ॥२॥
परं[4] चत्वारि सूक्तानि मारुतानि क ईं[ग]मिति।
तेषां तु पितरं देवं त्र्यम्बकं[घ] स्तौत्यृगुत्तमा ॥३॥
स्तुतौ तु मित्रावरुणौ सूक्तैर्य[ङ]दिति सप्तभिः।
अश्विनौ तु स्तुतौ[5] देवावष्टभिः प्रति वा[च]मिति ॥४॥
यद[छ]द्योतुर्य[ज] इति तिस्र उ[झ]द्वेतौषर्द्वंपञ्चमाः।
सौर्य्यं तच्चु[ञ][6]रिति तु गीयते चतुर्देवता ॥५॥

(१) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितम्।
(२) स्त्रिति क॰ ग॰ घ॰ च॰।
(३) त्वष्टौ प्रस्तापनी स्तुता इति क॰ ग॰ घ॰ च॰।
(४) ततः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) परैरिति क॰ ग॰ घ॰ च॰।
(६) तद्वत्तु तच्चतुरिति ख॰ ङ॰ पुस्तकान्तरञ्च।

(क) ऋ॰ ७, ५०, १। (ख) ऋ॰ ७, ५३, १। (ग) ऋ॰ ७, ५६, १
(घ) ऋ॰ ७, ५९, १२। (ङ) ऋ॰ ७, ६०, १। (च) ऋ॰ ७, ६७, १।
(छ) ऋ॰ ७, ६०, १। (ज) ऋ॰ ७, ६२, १। (झ) ऋ॰ ७, ६३, १।
(ञ) ७, ६६, १६।

आदित्यानां तद्वो[क] अद्य द्वे ऋचौ शौनकोऽब्रवीत्।
अन्याः सर्व्वा ऋचः सौर्या यदद्याद्याः[ख]प्रकीर्त्तिताः ॥६॥
इमे चेतार[ग] इत्याद्याः[१] सूक्ते मित्रो मितः स्तुतः।
अर्य्यम्णो वरुणस्यापि मित्रश्चैता नव स्तुताः ॥७॥
यदद्य सूरे[घ] इत्याद्या दशादित्या ऋचः स्तुताः।
सविता चा[२]दितिर्मित्रो वरुणस्त्वार्य्यमा भगः ॥८॥
स्तुता उदु त्य[ङ]दित्येतास्त्विह सौर्य्यस्ततः पराः।
आशीस्तच्चक्षु[च]रित्येतामाचार्य्य. शौनकोऽब्रवीत्[३] ॥९॥
उषास्तु सप्तभिर्व्युषाः[छ] सूक्तान्येभ्यः पराणि तु।
चत्वारीन्द्रावारुणानि[४] इन्द्रावरुणयोः स्तुतिः ॥१०॥
उदु ज्योति[ज]रिति त्वस्मिन्नर्द्धर्चे मध्यमः स्तुत.[५]।
वरुणस्य गृहाचात्रौ वसिष्ठः स्वप्न[६] आचरत् ॥११॥
प्रविवेशाथ तं तत्र श्वा नदन्नभ्यवर्त्तत[७]।

---

(१) इत्याद्यैरिति पाठ सङ्गतार्थ ।
(२) चेति ख॰ ङ॰।
(३) आदित्यानां तद्वो अद्येत्यादयश्चत्वारः श्लोकाः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेक्ष्यन्ते।
(४) इन्द्रावरुणयोरिति क॰ ग॰ घ॰ च॰।
(५) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ चिह्नितपुस्तकेषु नायच्छत।
(६) चौर्य्यमिति ङ॰।
(७) अभ्यधावतेति क॰ ग॰ घ॰ च॰।

---

(क) ऋ॰ ७, ६६, १२। (ख) ऋ॰ ७, ६६, ४। (ग) ऋ॰ ७, ६०, ५।
(घ) ऋ॰ ७, ६६, ४। (ङ) ऋ॰ ७, ६६, १४। (च) ऋ॰ ७, ६६, १६।
(छ) ऋ॰ ७, ७५, १। (ज) ऋ॰ ७, ७६, १।

क्रन्दन्तं सारमेयं स धावन्तं द्रष्टुमुद्यतं ॥१२॥
यदर्ज्जुने[क]ति च त्रिभिः सान्त्वयित्वा व्यसुष्वपत्[1]।
स तं[2] प्रस्वापयामास जनमन्यञ्च वारुणम् ॥१३॥
ततस्तु वरुणो राजा स्वान् पाशान् प्रत्यमुञ्चत[3]।
स बद्धः[4] पितरं सूक्तैश्चतुर्भिरित उत्तरैः[5] ॥१४॥
अभितुष्टाव धीरे[ख]ति सुमोचैनन्ततः पिता।
ध्रुवासु त्वे[ग]ति चोक्तायां पाशा अस्मादमोचिरे[6] ॥१५॥
पराणि त्रीणि सूक्तानि वायव्यानि प्रवीरया[घ]।
अत्र तास्त्वै[7]न्द्रवायव्याः ऋचो[8] यासु[9] द्विवत्स्तुतिः ॥१६॥
प्रवीरयोक्ता वायव्याः प्रा उ[10] गीत्यैतरेयके।

(१) क्रन्दन्तमित्यादि सान्त्वयित्वा व्यसुष्वपदित्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।
(२) एवमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(३) स्वैः पाशैः प्रत्यबध्यत इति क॰ ग॰ घ॰ च॰।
(४) बुद्धेति क॰ घ॰ च।
(५) बद्धः स वारुणैः पाशैः ध्रुवा( सत्वेति दृश्यते इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) मुमुचिरे इति पाठः शुद्धः।
(७) चेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(८) स्तुताविति क॰ ग॰ घ॰ च॰।
(९) यास्त्विति ख॰ ङ॰ पुस्तकान्तरञ्च।
(१०) प्रास्विति ख॰।

(क) ऋ॰ ७, ५५, २। (ख) ७, ८६, १। (ग) ऋ॰ ७, ८८, ७। (घ) ऋ॰ ७, ९०, १।

पदस्य व्यत्ययं कृत्वा वायोः प्राधान्यमुच्यते ॥१७॥

ते सत्येन ऋचो यावत्तरस्यतुर्ऋचः पुनः।

उग्रन्नीका(क) प्रसोता(ख) चर्गद्वयोरेता नव स्मृताः(१) ॥१८॥

ऐन्द्राग्ने शुचि(ग)मित्येते प्रेति(घ) सारस्वते परे।

स्तुतश्चैव सरस्वांस्तु(२) जनियन्त(ङ)श्चतुर्ऋचैः(३) ॥१९॥

राजा वर्षसहस्राणि(४) दीर्घित्वमाङवः पुरा।

चचारैकरथेनेमां ब्रुवन् सर्व्वाः समुद्रगाः ॥२०॥

यच्छे वहत भोगान् मे(५) इन्द्रशो वाप्यनेकशः(६)।

प्रत्यूचुस्तं नृपं नद्यश्चाल्पवीर्याः कथं वयं ॥२१॥

वहेम भोगान् सर्वांस्ते सत्रे वार्षसहस्रिके(७)।

---

(१) प्रवीरयोक्ता वायव्या इत्यादि द्वयोरेता नव स्मृता इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नालोक्यते।

(२) देवा सरस्वान् स इतीति ख० पुस्तकान्तरच। देवा इत्यत्र दृषे इति ख०।

(३) चतसृभिरिति क० घ० च० चतिसृभिरिति ग०।

(४) वर्षसहस्रायेति ख० ग० ङ० पुस्तकान्तरच।

(५) भोगान् मे इति पाठो युक्तः उत्तरत्र वधासमंगात्। ऽपवहत मां सर्व्वामिति क० घ० च०, वहद नःमान् मे इति ग०, वहत माः सर्व्वाः इति ङ०।

(६) वाप वैकशः इति क० ख० ग० ङ० च०।

(७) वर्षसहस्रके इति ख० ङ०।

---

(क) ऋ० ७, ६१, २। (ख) ऋ० ०, ६२, २। (ग) ऋ० ०, ६३, १।
(घ) ऋ० ७, ६५, १। (ङ) ऋ० ०, ६६, ४।

सरस्वतीं प्रपद्यस्व सा त्वा[१] वक्ष्यति नाहुष ॥२२॥
तथेत्युक्त्वा जगामाशु आपगां[२] स सरस्वतीम्।
सा चैनं प्रतिजग्राह दुदुहे च पयो घृतम्[३] ॥२३॥
एतदत्यद्भुतं कर्म सरस्वत्या नृपं प्रति।
वारुणिः[४] कीर्त्तयामास प्रथमस्य द्वितीयया ॥२४॥
द्वे बार्हस्पत्ये ऐन्द्रे च[५] वैष्णवे तु[६] परे ततः।
उत्तमैन्द्र्यश्च तिस्रः[क] स्युः[७] पर्ज्जन्ये तिस्र उत्तरे ॥२५॥
आग्नीर्त्त्वक् प्रथमा तत्र प्रथमस्य तृतीयया।
यज्ञे आद्यैन्द्रमेवास्तौदन्त्या त्विन्द्राबृहस्पती[८] ॥२६॥
तृतीया नवमी चैव स्तौतीन्द्राब्रह्मणस्पती[९]।

(१) ते इति ख० ङ० पुस्तकान्तरञ्च।
(२) जगामाथ पावनीमिति ख० ङ० पुस्तकान्तरञ्च।
(३) प्रतिजग्राह सा चैनं पय सर्पिश्च दुह्यतीति क० ग० घ० च०।
(४) वारुण इति ख०।
(५) ऐन्द्रे यज्ञे दिव' सूक्ते इति क० घ० च०, यज्ञे बार्हस्पत्यमैन्द्र-मिति ग०।
(६) चेति ख० ङ० पुस्तकान्तरञ्च।
(७) तृचो द्वितीयोत्तमैन्द्रेति क० घ० च०।
(८) आग्नीर्त्वक् प्रथमा तत्रेत्यादि अन्त्या त्विन्द्रा बृहस्पती इत्यन्तपाठ' क० ग० ध० च० चिह्नितपुस्तकेषु नोपलभ्यते। तेषु अस्मिन् स्थले, स्तौतीन्द्रं प्रथमा त्वत्र द्वितीयाद्या बृहस्पति। इति श्लोकार्द्धं वर्त्तते।
(९) सहेन्द्राब्रह्मणस्पती इति ख० ङ० पुस्तकान्तरञ्च।

(क) ऋ० ७, १०१, १।

संवत्सर(क)न्नु माण्डूकमैन्द्रासोमं(१) परन्तु यत् ॥२७॥
ऋषिर्ददर्श रक्षोघ्नं(२) पुत्रशोकपरिप्लुतः ।
हते पुत्रशते क्रुद्धः सौदासैर्दुःखितस्तदा(३) ॥२८॥
ये पाकशंस(ख)स्तृक् सौम्या(४) आग्नेयी तत उत्तरा ।
एकादशी वैश्वदेवी सौम्यस्तस्याः परो दृचः(५) ॥२९॥
यदि वाह(ग)स्त्वगाग्नेयी ऐन्द्री यो मे(घ)ति तु स्मृता(६) ।
ग्रावणी प्रयाजिगातौ(ङ)ति विक्षिठध्वं(च) तु मारुती ॥३०॥
प्रवर्त्तये(छ)ति पञ्चैन्द्य ऐन्द्रासोमौत्युगुत्तमा ।
ऋषिस्त्वाशिषमाशास्ते मानो रक्ष(ज) इति तृचि(७) ॥३१॥
दिवश्चैव पृथिव्याश्च तथा पालनमात्मनः ।
उलूक यातुं(झ)(८) जह्येतान्नानारूपान्निशाचरान्(९) ॥३२॥

---

(१) मण्डूका इन्द्रासोममिति ख० ङ० पुस्तकान्तरञ्च ।
(२) राक्षोघ्नमिति क० घ० ङ० च० ।
(३) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नेष्यते ।
(४) सौम्याविति ङ० ।
(५) द्यूचः इति ग० ।
(६) यो मेतीन्द्र स्तुतोऽर्द्धयेति ङ० पुस्तकान्तरञ्च ।
(७) तृचे इति क० घ० च० ।
(८) यातिति क० ख० ग० घ० च०, यान्त्विति पुस्तकान्तरम् ।
(९) अयं श्लोकः क० घ० च० चिह्नितपुस्तकेषु नेष्यते ।

---

(क) ऋ० ७, १०३, १ । (ख) ऋ० ७, १०४, ९ । (ग) ऋ० ७, १०४, १४ । (घ) ऋ० ७, १०४, १६ । (ङ) ऋ० ७, १०४, १७ । (च) ऋ० ७, १०४, १८ । (छ) ऋ० ७, १०४, १९ । (ज) ऋ० ७, १०४, २३ । (झ) ऋ० ७, १०४, २२ ।

पञ्चदश्यान्तु सूक्तस्यायाष्टम्यां[1] चैव वारुणिः ।
दुःखशोकपरीतात्मा शपते विलपन्निव ॥२३॥
हते पुत्रशते तस्मिन्[2] वसिष्ठो दुःखितस्तदा ।
रक्षोभूतेन शापात्तु सुदासेनेति नः श्रुतं[3] ॥२४॥
कण्वश्चैव प्रगाथश्च घोरपुत्रौ बभूवतुः ।
गुरुणा तावनुज्ञातावूषतुः सहितौ वने ॥२५॥
वसतोस्तु तयोस्तत्र कण्वपत्न्याः शिरःस्वपन्[4] ।
कृत्वा कनीयान् कण्वस्योरूत्सङ्गावन्वबुध्यत[5] ॥२६॥
शप्तुकामस्तु तं कण्वः क्रुद्धः पापाभिशङ्कया ।
बोधयामास पादेन दिधक्षन्निव तेजसा ॥२७॥
विदित्वा तस्य तं भावं प्रगाथः प्राञ्जलिः स्थितः ।
मातृत्वे च पितृत्वे च वरयामास तावुभौ ॥२८॥
स घौरो[6] वाय काण्वो वा वंशजैर्बहुभिः पितुः ।
ददर्शान्यैश्च सहितः स्वपिर्मण्डलमष्टमम् ॥२९॥

---

(१) षष्ठ्यामिति क॰ ग॰ घ॰ च॰ ।
(२) क्रुद्ध इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(३) वै श्रुतिरिति क॰ ग॰ घ॰ च॰ ।
(४) शिरःश्रमादिति क॰ घ॰ च॰ । शिरःस्वपदिति ख॰ ग॰ ।
(५) उत्सङ्गेनावबुध्यतेति क॰ घ॰ च॰ । कण्वस्योरूत्सङ्गेन त्वबुध्यतेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(६) घोरः इति क॰ ख॰ घ॰ च॰ ।

माचिदे(क)न्द्राणि चत्वारि अन्वस्य स्थूर(ख मित्यृचि ।
तुष्टावाङ्गिरसौ नारी वसन्तौ[1] प्रश्वतौ(ग) पतिम् ॥ ४०॥
स्त्रिय सन्त[2] पुमासन्तमासङ्ग स्तुतवानृषि[3] ।
* स्वस्य[4] दान स्तुवौ(घ)त्यृग्भिस्तुर्भि परिकीर्त्तितम् ॥४१॥
ग्रिचे(ङ)त्यृगभ्या तु काण्वस्य विभिन्दो परिकीर्त्तितम् ।
पाकस्थाम्नस्तु[5] भोजस्य चतुर्भिर्यमिति(च) स्तुतम् ॥४२॥
पौष्णौ प्रेति* प्रगाथौ द्वौ[6] मन्यते शाकटायन ।
ऐन्द्रमेवाथ पूर्वन्तु गालव पौष्णमुत्तरम्[7] ॥४३॥
ऐन्द्राणामिह सूक्तानामुत्तमस्योत्तमे त्वचे ।
दान राज्ञ कुरुङ्गस्य स्थूर राध(ज) इति स्तुत ॥४४॥
दूरा(झ)दित्याश्विने सूक्ते सप्तत्रिंशत्तामे(ञ) यथा ।

---

(१) वसन्ताविति ख० । वसताविति ङ० ।
(२) त्यन्तमिति ग० ।
(३) मास त स्तुतवान्तमिरिति ङ० पुस्तकान्तरश्च ।
(४) तस्येति ख० ङ० पुस्तकान्तरश्च ।
(५) चेति ख० ङ० ।
(६) त्विति ख० ङ० पुस्तकान्तरश्च ।
(७) उत्तममिति ङ० ।

---

(क) ऋ० ८, १, १ । (ख०) ऋ० ८, १, ३४ । (ग) ऋ० ८, १, ३४ ।
(घ) ऋ० ८, १, ३० । (ङ) ऋ० ८, २, ४१ । (च) ऋ० ८, ३, २१ ।
(छ) ऋ० ८, ४, १५ । (ज) ऋ० ८, ४, १९ । (झ) ऋ० ८, ५ १ ।
(ञ) ऋ० ८, ५, ३७ ।

तत्रार्द्धर्चौ[१] दृच[२]श्चान्यः कण्वोर्दानस्तवः स्तुतः ॥४५॥
महानितो[क]न्द्रदैवत्यमग्निं वैश्वानरं स्तुतम्[३] ।
मन्यते शाकपूणिस्तु भार्म्याश्व[४]श्चैव मुद्गलः ॥४६॥
तृचे तु यत[ख]मित्यस्मिन् दानं तैरिन्दिरं स्तुतम् ।
परन्तु मारुतं प्रेति[ग] आन[घ]स्तौष्या[ङ]श्विनानि च[५] ॥४७॥
त्व[च]माग्नेयं य इन्द्रे[छ]ति षडैन्द्राण्युत्तमस्य तु ।
उपोत्तमायामर्द्धर्चे देवो वास्तोष्पतिः[ज] स्तुतः ॥४८॥
इद[झ]मादित्यदैवत्यं तिसृभिस्त्वदितिः[ञ] स्तुता[६] ।
षष्ठ्यां चतुर्थीसप्तम्योरुते[ट]त्याश्विन्युगष्टमी[७] ॥४९॥
स्तुताः प्र[ठ]मिति पञ्चोक्ता[८]मग्निसूर्यानिलास्त्रयः ।

---

(१) इत्यर्द्धर्चः इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(२) द्व्यृचः इति क॰ घ॰ ङ॰ च॰ ।
(३) महानैन्द्रं प्रत्नवत्यामग्निर्वैश्वानरः स्तुतः इति क॰ ग॰ घ॰ च॰ ।
(४) भार्म्यश्वः इति ङ॰ ।
(५) स्मृतः इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(६) तथेति क॰ ङ॰ पुस्तकान्तरञ्च ।
(७) षष्ठ्यां चतुर्थ्यां सप्तम्योतेत्याश्विन्युगष्टमीति क॰ घ॰ च॰ ।
(८) पञ्चस्त्विति क॰ ग॰ घ॰ च॰ ।

---

(क) ऋ॰ ८, ६, १ । (ख) ऋ॰ ८, ६, ४६ । (ग) ऋ॰ ८, ७, १ ।
(घ) ऋ॰ ८, ८, १ । (ङ) ऋ॰ ८, ८, २२ । (च) ऋ॰ ८, ११, १ ।
(छ) ऋ॰ ८, १२, १ । (ज) ऋ॰ ८, १७, १४ । (झ) ऋ॰ ८, १८, १ ।
(ञ) ऋ॰ ८, १८, ६ । (ट) ऋ॰ ८, १८, ८ । (ठ) ऋ॰ ८, १८, ९ ।

वरुणार्य्यमित्राणां प्रगाथोऽय[१]मिति स्तुतिः[२] ॥५०॥
आग्नेये स्तुती राजर्षेस्त्रसदस्योरदा[क]दिति।
पञ्चाशतं वधूनाञ्च गवां तिस्रश्च सप्ततीः ॥५१॥
अश्वोष्ट्राणामुरभ्राणां वासांसि विविधानि च।
रत्नानि वृषभं श्यावं तासामग्रेसरं पतिम्[३] ॥५२॥
कृत्वा दारानृषिर्गच्छन्निन्द्रायैतच्छशंस ह।
वयं[ख] सूक्तेन शक्रश्च प्रीतस्तेन शचीपतिः ॥५३॥
ऋषे वरं वृणीष्वेति प्रह्वस्तमृषिरब्रवीत्।
काकुत्स्थ कन्याः पञ्चाशद्युगपद्रमये प्रभो ॥५४॥
कामतो बहुरूपत्वं यौवनं[४] चाक्षयां रतिं।
शङ्खनिधिं पद्मनिधिं मद्गृहेष्वनपायिनम्[५] ॥५५॥
प्रासादान् विश्वकर्म्मासौ सौवर्णांस्त्वत्प्रसादतः।
करोतु पुष्पवाटीश्च पृथक्तासां सुरद्रुमैः ॥५६॥
मा भूत् सपत्नी स्पर्द्धायां सर्व्वमस्त्विति चाब्रवीत्[६]।

(१) वरुणार्य्यमित्राणां प्रगाथेयमिति ख० ङ०।
(२) स्तुताः इति ख० ङ० पुस्तकान्तरञ्च, तदेवि ग०।
(३) चाग्रे शरं प्रतीति ख०।
(४) युगपदिति ङ०।
(५) काकुत्स्थेत्यादिसार्द्धश्लोकः पुस्तकान्तरे न दृश्यते।
(६) पञ्चाशतं वधूनाञ्चेत्यादि सर्व्वमस्त्विति चाब्रवीदित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेच्छते।

(क) ऋ० ८, १९, ३६। (ख) ऋ० ८, २१, १।

आगन्त[क] मारुतं सूक्तं वय[ख]मित्यैन्द्रमुत्तरम्[१] ॥५७॥
काण्वस्य सौभरे[२]श्चैव यजतो वंशजैः[३] सह।
कुरुक्षेत्रे यज्ञान् जुहुर्हवींषि विविधानि च ॥५८॥
आख्युश्च[४] सोऽभितुष्टाव इन्द्रश्चित्रं सरस्वतीं।
इन्द्रो वे[ग]त्यनयर्चा स दानशक्तिं प्रकाशयन् ॥५९॥
आख्युराजोऽभिमानाच्च प्रहर्षितमनाः स्वयम्[५]।
स स्तुतो[६] देववच्चित्र[घ] ऋषये तु गवां ददौ[७] ॥६०॥
अयुतानां सहस्रं वै निर्जगाद स्तुवन्नृपिः।
ऋषिश्चोवाच[८] हृष्टात्मा नाहमर्हाम्यृषेः स्तुतिम् ॥६१॥
तिर्यग्योनौ समुत्पन्नो[९] देवतां[१०] स्तोतुमर्हसि।

(१) वयमैन्द्रमतः परमिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(२) सौभरेरिति क॰ ग॰ घ॰ च॰।
(३) वङ्गजैरिति क॰ घ॰ च॰।
(४) आख्यवः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) इन्द्रोवेत्यनयर्चा स इति श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नालोक्यते।
(६) संस्तुत इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।
(७) यद्ददौ तद्वृचेन हेति ङ॰ पुस्तकान्तरञ्च।
(८) प्रोवाचेति ङ॰।
(९) समुद्भूत इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(१०) देवं नः इति ग॰।

(क) ऋ॰ ८, २०, १। (ख) ऋ॰ ८, २१, १। (ग) ऋ॰ ८, २१, १७। (घ) ऋ॰ ८, २१, १८।

तमन्त्यया पुनश्चास्तौदोत्यं(क) सूक्तेन चाश्विनौ(१) ॥६२॥
ईळि(ख)ष्वेत्येतदाग्नेयं सखायश्चैन्द्रमुत्तरम्(२) ।
यथा वरः सुषाम्णे (ग)उत्तमस्त्वौषसस्तृचः ॥६३॥
अष्टौ तु सहिता एता देवता विभिदुर्वलम् ।
उषाश्चेन्द्रश्च सोमश्चाथाग्निः सूर्यो बृहस्पतिः ॥६४॥
अङ्गिराः सरमा चैव ता वा(घ)मित्युत्तरस्य तु ।
आदौ मैत्रावरुण्यस्तु(३) नव द्वादश तूत्तराः ॥६५॥
वैश्वदेव्यो वरूराजा यथादादृषये वसु ।
इन्द्रो वेत्येतयर्चा तु दानशक्तिप्रकाशनम्(४) ॥६६॥
कीर्त्तितं(५) तु तृचे तस्मिन्नृच(ङ)मुदप्सायने ।
अश्विनौ ददतुः प्रीतौ तदिहोक्तं सुषामनि(६)(च) ॥६७॥

---

(१) स्तुत्वा चित्रं सूक्तैः षड्भिरिति क॰ घ॰ च॰।

(२) उत्तममिति ङ॰ एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितम्। तेषु अस्मिन् स्थले, अश्विनावग्निमिन्द्रश्च चाभितुष्टाव देवताः। एतच्छ्लोकार्द्धं वर्त्तते।

(३) मित्रावरुण्य इति ख॰ ङ॰।

(४) एतच्छ्लोकार्द्धं ख॰ ग॰ ङ॰ चिह्नितपुस्तकेषु नापश्यत।

(५) कीर्त्तनमिति ङ॰ पुस्तकान्तरञ्च।

(६) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।

---

(क) ऋ॰ ८, २२, १। (ख) ऋ॰ ८, २३, १। (ग) ऋ॰ ८, २४, २८। (घ) ऋ॰ ८, २५, १। (ङ) ८, २६, २२। (च) ऋ॰ ८, २६, २२।

आश्विनं तु युवो[क]र्युक्ष्व[ख] वायव्या उत्तरास्तु याः ।
यं सवर्णमनुर्नाम लेभे पुत्रं विवस्वतः ॥६८॥
वैश्वदेवानि पञ्चैतान्यग्निरुक्थे[ग] जगाद सः[१] ।
बभुरेक[घ] इति त्वस्मिंस्त्विङ्गतो[२] दिप्रदा दश ॥६९॥
स्तूयन्ते देवता ह्यासु कर्मभिः[३] स्वैः पृथक् पृथक् ।
स्तुताः कर्मगुणैः स्वैः स्वैर्देवता यत्र यत्र तु ॥७०॥
पृथक् कर्मस्तुतिर्नाम वैश्वदेवन्तदेव तु[४] ।
तासाम्बभुरिति त्वाद्या सौम्याग्नेयी त्वगुत्तरा ॥७१॥
त्वाष्ट्री चैन्द्री च रौद्री च पौष्णी वैष्णव्यृगाश्विनी ।
नवमी मैत्रावरुण्यृन्द्रमसी मित्रसंस्तवा ॥७२॥
यजमानप्रसङ्गाच्च यजिरेवात्र संस्तुता ।
यो यजाति[ङ]दृचे शक्रो यजतां पतिरीलितः ॥७३॥
तस्य द्युमान्[च] दृचे यज्वा चतसृष्वपि मध्वि[छ]ति ।

(१) वैश्वदेवानि सूक्तानि जगादाभिरेतत् स्वयमिति क॰ च—छ॰ ।
(२) त्वेता लिङ्गत इति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च ।
(३) ह्यासां नवभिरिति क॰ घ॰ च॰ ।
(४) पृथक् कर्मस्तुतेरुक्तं तद्विद्याद्वैश्वदैवतमिति ख॰ ङ॰ पुस्तकान्तरञ्च

(क) ऋ॰ ८, २६, १। (ख) ऋ॰ ८, २६, २०। (ग) ऋ॰ ८, २७, १। (घ) ऋ॰ ८, २८, १। (ङ) ऋ॰ ८, ३१, १। (च) ऋ॰ ८, ३१, ३। (छ) ऋ॰ ८, ३१, ५।

यज्ञनोरेव दम्पत्योः पञ्च या(क) दम्पतीत्यृचः ॥७४॥
आग्मन्वा(ख)ग्नीरेतु(ग) पौष्णी परे मिचार्यमा यथा(घ)।
वरुणश्च स्तुतस्तत्र आदित्या अग्नि(ङ)मग्नये(१) ॥७५॥
सूक्तानि प्रकृतानी(च)ति चौर्षेन्द्राणि पराण्यतः।
अध(छ) इत्यत्र कन्या तं स्तौत्यिन्द्रेनेन्द्रमब्रवीत् ॥७६॥
स हि तां कामयामास दानवीं पाकशासनः।
ज्येष्ठां स्वसारं पुंसस्य(२) तस्यैव वधकाम्यया(३) ॥७७॥
अग्निने(ज)त्याश्विनं सूक्तमैन्द्रे सूक्ते परे ततः।
ऐन्द्राग्न्यात् परमाग्नेयमैन्द्राग्न्याद्वारुणे(४) परे ॥७८॥
उत्तरे वरुणे लक्ष्य आ वा(झ)मित्याश्विनस्तृचः।
सूक्ते इमे(ञ) समाग्नेये(५) ताभ्यामैन्द्रे ततः परे(६) ॥७९॥

(१) ये यजाति ऋचे शक इत्यादिसार्द्धश्लोकद्वयं क० ग० घ० च० चिह्नित-पुस्तकेषु नासत्यत।

(२) पुंसस्येति क० घ० च०, यंसस्येति ख० पुस्तकान्तरस्थ।

(३) युवकाम्ययेति ख० ग० ङ० पुस्तकान्तरस्थ।

(४) ऐन्द्राग्न्यं परमाग्नेयमैन्द्राग्नं वारुणे इति क० घ० च०। वारुणे इत्यत्र वारुणमिति ग०।

(५) इमे तु चाग्नेये इति क० घ० च०।

(६) ताभ्य मैन्द्रेति चोत्तरे इति क० ग० घ० च०।

(क) ऋ० ८, ३१, ५। (ख) ऋ० ८, ३१, १०। (ग) ऋ० ८, ३१, ११। (घ) ऋ० ८, ३१, १३। (ङ) ऋ० ८, ३१, १४। (च) ऋ० ८, ३२, १। (छ) ऋ० ८, ३३, १९। (ज) ऋ० ८, ३५, १। (झ) ऋ० ८, ४२, ४। (ञ) ऋ० ८, ४३, १।

वध्यायाख्याय(१)यत्(२)प्रादात्कानीनस्तु पृथुश्रवाः।
तदत्र संस्तुतं दानमास(क) इत्येवमादिभिः(३) ॥८०॥
आनः(ख) प्रगाथो वायव्यः सूक्तस्योपोत्तमा च या।
मित्रार्य्यमाणौ मरुतः सुनीथोध(ग)दृचे स्तुताः ॥८१॥
द्विचत्वारिंशकाक्रीत(४) स्त्रिशोकाय पुरन्दरः।
गिरिं निकृत्य वज्रेण गा ददावसुरैर्हृताः ॥८२॥
यः(घ) कृन्तदिति चैतस्मिन्दृषिस्तु स्वयमब्रवीत्(५)।
स्तुता नवम्या त्वदितिर्महो(ङ)त्यादित्यदेवते(६) ॥८३॥
अन्त्याः पञ्चोपस्येऽपि स्युः सौम्यं स्वादो(च)रिति स्मृतम्।
पराण्यष्टौ तु(७) सूक्तानि ऋषीणां तिग्मतेजसाम् ॥८४॥

(१) वध्रापाख्यायेति ग• ।
(२) वध्रान्धाय वपदिति ङ• ।
(३) आदिनेति ख• ङ• पुस्तकान्तरेच ।
(४) प्रातः इति ङ• पुस्तकान्तरेच ।
(५) मित्रार्य्यमाणौ मरुतः इत्यादि ऋषिस्तु स्वयमब्रवीदित्यन्तपाठः क•
ग• घ• च• चिह्नितपुस्तकेषु नेच्यते।
(६) चापीति क• ग• च• ।
(७) मराणि चाष्टाविति ख• ङ• पुस्तकान्तरेच ।

(क) ऋ• ८, ४६, २१ । (ख) ऋ• ८, ४६, २५ । (ग) ऋ• ८, ४६, ४ । (घ) ऋ• ८, ४६, २७ । (ङ) ऋ• ८, ४७, १ । (च) ऋ• ८, ४८, १ ।

ऐन्द्राग्निमि(क) तु षड्विंशः प्रगाथो बहुदैवतः।
अगन्याग्नेरचैत्य(ख)ग्निः सूर्य्यमन्यपदा(१) जगौ(२) ॥८५॥
प्रस्कण्वश्च पृषध्रश्च(३) प्रादाद्यदसु किञ्चन।
तद्भूरी(ग)दिति सूक्ताभ्यामखिलन्विह संस्तुतम्(४) ॥८६॥
ऐन्द्राग्न्युभय(घ)मित्यच षडाग्नेयात् पराणि तु(५)।
निपातमाह(६) देवानां दाता म(ङ) इति भागुरिः ॥८७॥
ऋचे(७)यास्कस्तृचन्त्वेतं(८) मन्यते वैश्वदेवतं।
आदित्यदैवतं सूक्तं त्याग्नि(च)त्यच परन्तु यत् ॥८८॥
धीवराः सहसा मीनान् दृष्ट्वा सारस्वते जले।

---

(१) अन्त्यं पदमिति ङ० पुस्तकान्तरच।
(२) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते। तेषु अस्मिन् स्थले, अन्वेत्यग्निरिति तस्मात्ततोऽग्निः सूर्य्य एव तु। इति श्लोकार्द्धमस्ति।
(३) त्विति ङ०।
(४) मरिकीर्त्तितमिति ख० ङ० पुस्तकान्तरच।
(५) श्लोकार्द्धमेतत् ख० ङ० चिह्नितपुस्तकयोर्न विद्यते।
(६) निपातानाहेति ख०, निपातेनेहेति ङ० पुस्तकान्तरच।
(७) ऋचमिति ग०।
(८) यास्कोऽस्मेऽर्द्धं ऋचं चैनमिति ङ०।

---

(क) ऋ० ८, ४८, १। (ख) ऋ० ८, ५६, ५। (ग) ऋ० ८, ५५, १। (घ) ऋ० ८, ६१, १। (ङ) ऋ० ८, ६५, १०। (च) ऋ० ८, ६७, १।

जालं प्रचिप्य तान् बद्धोदक्षिपन् सलिलात् स्थलम् ॥८९॥
शरीरपातभीतास्ते तुष्टुवुश्चादितेः सुतान्।
मुमुचुस्तांस्ततस्ते च प्रसन्नास्तान् समूदिरे ॥९०॥
धीवराः क्षुद्व्यं मा वो भूत्स्वर्गं प्राप्स्यथेति च[१]।
उते[क]ति माता चैवैषां ढचेनाभिष्टुतादितिः ॥९१॥
मातृत्वाद्गर्भसम्बन्धात्[२] स्तुयेतैषां[३] स्तुतौ स्तुतौ।
ऐन्द्राग्न्या त्वा रथं[ख] चौणि सौत्यूढतुपमे[ग]ति षट् ॥९२॥
आर्चाश्वमेधयोश्च पञ्चदानस्तुतिः परा।
अपा[घ]दिन्द्रस्य चाग्नेश्च विश्वेषां चैव संस्तवः ॥९३॥
दृचस्य प्रथमोऽर्द्धर्चः शेषा वरुणदेवताः[४]।
त्व[ङ]माग्नेयेऽथ वा सूक्ते उत्तरे[५] हविषां स्तुतिः॥९४॥
पयःपश्चोषधीनाञ्च[६] तथा रूपं हि दृश्यते।

(१) धीवराः सहसा मीनानित्यादि सार्द्धश्लोकद्वयं क॰ ग॰ घ॰ च चिह्नितपुस्तकेषु नापश्यत।

(२) मातृत्वादतिसम्बन्धादिति क॰ च॰, मातृत्वादभिसम्बन्धादिति ग॰ मातृत्वादिति सम्बन्धादिति घ॰।

(३) स्तवन्त्येनामिति ख॰ ङ॰ पुस्तकान्तरञ्च।

(४) शेषो वरुणदेवतः इति ख॰ ग॰ ङ॰।

(५) सूक्तमुत्तरमिति क॰ ग॰ घ॰ च॰।

(६) चेति ख॰ ङ॰।

(क) ऋ॰ ८, ६७, १०। (ख) ऋ॰ ८, ६८, १। (ग) ऋ॰ ८, ६८, १४। (घ) ऋ॰ ८, ६९, ११। (ङ) ऋ॰ ८, ७१, १।

उ[क]दित्याश्विनमाग्नेये परे सूक्ते विभो विभः[ख] ॥९५॥
ऋग्भ्यामह[ग]मिति द्वाभ्यां स्तौत्यात्मानमृषिः स्वयम्।
आत्मानमात्मना स्तुत्वा स्तौति दानं श्रुतर्वणः ॥९६॥
आत्मादानाभिषम्बन्धात् परुष्णीञ्च महानदीम्[1]।
परुष्णीं परया चेन्द्रं[2] त्रिभिः सूक्तैरिम[घ]न्विति ॥९७॥
सौम्यस्य त्वय[ङ]मित्यस्य पराण्यैन्द्राणि यानि तु।
नह्वी[च]ति तेषां प्रथमे[3] वैश्वदेव्यृगवीवृधत्[छ] ॥९८॥
देवाना[ज]मिति देवानाम्प्रेष्ठ[झ]माग्नेयमुत्तरम्[4]।
त्रीण्याश्विनानि सूक्तानि आ मे[ञ]ऐन्द्राणि तं[ट] तथा[5] ॥९९॥
अपालाऽत्रिसुता त्वासीत्कन्या त्वग्दोषिणी पुरा।
तामिन्द्रश्चकमे दृष्ट्वा[6] विजने पितुराश्रमे ॥१००॥

---

(१) आत्मानमात्मना स्तुत्वेत्यादि परुष्णीञ्च महानदीमित्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितः।
(२) परया परुष्णीमिन्द्रमिति क॰ ग॰ घ॰ च॰।
(३) प्रथममिति ङ॰ पुस्तकान्तरञ्च।
(४) आग्नेयन्तु ततः परमिति क॰ घ॰ च॰।
(५) आम इति ऐन्द्राणि तमितीति चेति क॰ ग॰ घ॰ च॰।
(६) दृष्ट्वेति क॰ घ॰ च॰।

---

(क) ऋ॰ ८, ७३, १। (ख) ऋ॰ ८, ७४, १। (ग) ऋ॰ ८, ७४, १३। (घ) ऋ॰ ८, ७६, १। (ङ) ऋ॰ ८, ७९, १। (च) ऋ॰ ८, ८०, १। (छ) ऋ॰ ८, ८०, १०। (ज) ऋ॰ ८, ८३, १। (झ) ऋ॰ ८, ८४, १। (ञ) ऋ॰ ८, ८५, १। (ट) ऋ॰ ८, ८८, १।

तपसा बुबुधे सा तु सर्व्वमिन्द्रचिकीर्षितम्।
उदकुम्भं समादाय अपामर्थे जगाम सा[१] ॥१०१॥
दृष्ट्वा सोमम्पा-दास्ये तुष्टावर्चा वने तु तं।
कन्या वा॰ रिति चेत
यमेषोऽर्थः कथितः स्तुतः[२] ॥१०२॥
सा सुषाव मुखात् सोमं सुतन्द्र ... चखाव तं[५]।
असौ य एषी[७] त्यनया पपाविन्द्रस्तु तन्मुखात्[३] ॥१०३॥
अपूर्पाचैव सक्तूंश्च भचयित्वा तु तद्गृहात्[४]।
अभिष्टुष्टाव सा चैनं जगादैनं ऋचेन तु[६] ॥१०४॥
सुलोमामनवद्याङ्गीं कुरु मां शक्र सुत्वचां।
तस्यास्तद्वचनं श्रुत्वा प्रीतस्तेन पुरन्दरः[७] ॥१०५॥
रथच्छिद्रेण तामिन्द्रः शकटस्य युगस्य च।

---

(१) क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु उदकुम्भं समादायेति श्लोकार्द्धे, अपूपांश्चैव सक्तूंश्चेति श्लोकार्द्धात्परतः पठितम्।
(२) दृष्ट्वासोममपादास्ये इत्यादि यमेषोऽर्थः कथितः स्तुतः इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तके नोपलभ्यते।
(३) पपाविन्द्रस्तु तन्मुखादिति क॰ ग॰ घ॰ च॰।
(४) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।
(५) प्रतकन्नुरिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) असौ ब्रूते दृचेन सेति ङ॰ पुस्तकान्तरञ्च।
(७) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ॰ ८, ९१, १। (ख) ऋ॰ ८, ९१, २।

प्रच्छिय निश्चकर्ष चिः सुलक् सा तु ततोऽभवत्[१] ॥१०६॥
तस्यां त्वचि व्यपेतायां पूर्व्वस्यां प्रह्नको[२]ऽभवत् ।
उत्तरा त्वभवद्बोधा क्षकलासस्त्वगुत्तमा ॥१०७॥
इतिहासमिमं[३] सूक्तं त्वाहतुर्यास्कमाठरौ[४] ।
कन्ये[क]ति शौनकः सूक्ते पान्त[ख]मैन्द्रे ततः परे[५] ॥१०८॥
उत्तमा चार्भवी प्रोक्ता उत्तरस्यैतरेयके ।
छान्दोगिके तृतीये तदार्भवं शस्यते यतः[६] ॥१०९॥
मारुतं गौः[ग] परं सूक्तमा त्वै[घ]न्द्राणि[७] पराणि षट् ।
सूक्ते द्वितीय एतेषामितिहासं प्रचक्षते[८] ॥११०॥

---

(१) ततः सा सुलचाभवदिति ङ० पुस्तकान्तरञ्च ।
(२) तस्यास्त्वगपहृतायाः पूर्व्वा सा प्रत्यक इति क० ग० घ० च० ।
(३) इदमिति क० ग० घ० च० ।
(४) यास्कभागुरिरिति क० ग० घ० च० यास्कगालवाविति ङ० पुस्तकान्तरञ्च ।
(५) शौनकस्त्वैन्द्रं यान्तमित्युत्तरे च ये इति क० ।
(६) उत्तमा चार्भवीत्यादिश्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापश्यत ।
(७) त्वात्वैन्द्राणीति क० ग० घ० च० ।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते ।

---

(क) ऋ० ८, ९१, १। (ख) ऋ० ८, ९२, १। (ग) ऋ० ८, ९४, १। (घ) ऋ० ८, ९५, १।

अपक्रम्य तु[१] देवेभ्यः सोमो वृत्रभयार्दितः।
नदीमंशुमतीनाम्नीमभ्यतिष्ठत् कुरून्[२] प्रति ॥११ १॥
तं बृहस्पतिनैकेन अभ्यपा[३]द्वृत्रहा सह।
योत्स्यमानः सुसंहृष्टे[४]र्मरुद्भिर्विविधायुधैः ॥११ २॥
दृष्ट्वा तानायतः सोमः स्वबलेन व्यवस्थितः।
मन्वानो वृत्रमायान्तं[५] जिघांसुमरिसेनया ॥११ ३॥
व्यवस्थितं धनुष्मन्तं तमुवाच बृहस्पतिः।
मरुत्पतिरयं सोम एहि[६] देवान्[७] पुनर्विभो ॥११ ४॥
श्रुत्वा देवगुरोर्वाक्यमनर्थं वृत्रशङ्कया[८]।
सोऽब्रवीचेति तं शक्र ओजसैव[९] बलाद्बली ॥११ ५॥

---

(१) अपचक्रामेति ख० ङ० पुस्तकान्तरञ्च।
(२) अंशुमती नाम्ना अत्यतिष्ठद्गुरूनिति क० ग० घ० च०, अभ्यतिष्ठत् कुरूनिति ख० ङ०।
(३) अभ्ययादिति पाठः साधुः। अभ्यायादिति ङ० पुस्तकान्तरञ्च।
(४) योत्स्यमानश्च संहृष्टैरितीति क० घ० च०।
(५) दृष्ट्वा तथाप्यतत्सोमं स्वबलेन व्यवस्थितम्। मन्वानं वृत्रमायान्तमिति क० घ० च०।
(६) मरुत्पतिरयं सोममेहीति क० ग० घ० च०।
(७) देवेति पाठः समीचीनः।
(८) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(९) स्वर्ग एवेति क० घ० च०।

द्याय देवानायन्तं[१] तं पपुर्विधिवत्सुराः ।
जघ्नुः पीत्वा च दैत्यानां समरे[२] नवतीर्नव ॥११६॥
तदेतद्‌प्यवद्रप्स[३][क]सूक्ते सर्व्वं निगद्यते ।
तृचस्य देवता तस्य[४] इन्द्रमेवाह शौनकः ॥११७॥
ऐन्द्रावार्हस्पत्य उक्ता ब्राह्मणे तैतरेयके[५] ।
तृचेनेन्द्रमपश्यन् तं [६]नेमोऽय[ख]मिति भार्गवः ॥११८॥
तुष्टावेन्द्रो तृचेनाय[ग]मत्तं पश्य च मास्तषे ।
स हि स्तुवन्नेव एको नेन्द्रा[७] अस्तीति चाब्रवीत् ॥११९॥
तदाकर्ण्येन्द्र आत्मानमृग्भ्यां तुष्टाव दर्शयन्[८] ।

(१) च्यादायेति क० ग० घ० च० ।
(२) इतरा इति क० घ० च० ।
(३) तदेतदपि यतस्मिन्निति क० ग० च० ।
(४) देवता स्तोता इति ख० ग० ङ० पुस्तकान्तरञ्च ।
(५) श्लोकार्द्धमेतत् क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(६) अदृश्यन्तमिति क० घ० च०,ऐन्द्रमपश्यन् तमिति ङ० पुस्तकान्तरञ्च ।
(७) इन्द्रः इति पाठः साधुः ।
(८) स हि स्तुवन्नेव एक इत्यादि ऋग्भ्यां तुष्टाव दर्शयन्नित्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न पठितः ।

(क) ऋ० ८, ८६, १३ । (ख) ऋ० ८, १००, १ । (ग) ऋ० ८, १००, ४ ।

अपिस्तु दृष्ट्वा[१] सुप्रीतो विश्वेत्तात [क]इति दृचे ॥१२०॥
विविधानि च कर्म्माणि दानमैन्द्रश्च शंसति।
मनोजवा[ख]स्तु सौपर्णो[२] समुद्रे[ग] वज्रसंस्तवः ॥१२१॥
वाचं सर्व्वगतां देवीं[घ] स्तौति यदा[ङ]गिति दृचे।
त्रींल्लोकानभितप्येमान्[३] वृषस्तस्थौ स्वयं त्विषा ॥१२२॥
तं नाशकं हन्तुमिन्द्रो विष्णुमभ्येत्य सोऽब्रवीत्।
वृत्रं हनिष्ये तिष्ठस्व विक्रम्याद्य[४] ममान्तिके ॥१२३॥
उद्यतस्य तु[५] वज्रस्य द्यौर्ददातु[६] ममान्तरम्।
तथेति विष्णुस्तच्चक्रे द्यौश्चास्य विवरन्ददौ ॥१२४॥
तदेतदखिलं प्रोक्तं विष्णविति सखे[च]त्वृचि[७]।

(१) तं दृष्ट्वेति ख॰ ङ॰ पुस्तकान्तरञ्च।
(२) सौवर्णीति ख॰ ङ॰।
(३) अभितप्येमानिति ख॰ ङ॰ पुस्तकान्तरञ्च।
(४) वृत्रं हनावविक्रम्य तिष्ठस्वाद्येति ख॰ ङ॰ पुस्तकान्तरञ्च।
(५) उद्यतस्यैवेति क॰ घ॰ च॰।
(६) दद्यादिति क॰ घ॰ च॰।
(७) सर्व्वमपिप्रोक्तं सखेत्यृचीति क॰ ग॰ घ॰ च॰।

(क) ऋ॰ ८, १००, ६। (ख) ऋ॰ ८, १००, ८। (ग) ऋ॰ ८, १००, ९। (घ) ऋ॰ ८, १००, ११। (ङ) ऋ॰ ८, १००, १०। (च) ऋ॰ ८, १००, १२।

मैत्रावरुणः सूक्ताद्यस्तस्त्वृध(क)गित्यृचः ॥१२५॥
प्रे(ख)ति मित्राय वा पादाद्यार्यम्णो(१) वरुणस्य च।
नय(ग)स्तुर्यः सर्वेषामादित्यानामिति स्तुतिः ॥१२६॥
परा त्वादित्यदेवत्या(२) आम(घ) इत्याश्विनो त्वृचः(३)।
वायव्ये चोत्तरे सौर्य्ये औषसी त्वृगियं(ङ) परा(४) ॥१२७॥
पावमानी प्रजा हे(च)ति माते(छ)त्यृग्भ्यान्तु गौः स्तुता।
त्वमग्ने बृह(ज)दाग्नेये परेऽग्निस्त्वृचि संस्तुतः ॥१२८॥
मरुद्भिः सह रुद्रेश्च आग्ने याही(झ)ति मध्यमः।
प्रजा हे(ञ)त्यपि वार्द्धर्चे प्रथमेऽग्निरिहोच्यते ॥१२९॥
पादे तृतीये आदित्य स्तुरीये मध्यमः स्तुतः।

---

(१) मित्राय पादस्य चार्य्यम्णः इति क० ख० ग० घ०।
(२) ऋच आदित्यदेवत्या इति ङ० पुस्तकान्तरञ्च।
(३) त्वृचः इति ग०।
(४) सौर्य्यं औषस्या प्रभां वा चन्द्रसूर्य्ययोरिति ख० ङ० पुस्तकान्तरञ्च। औषस्या इत्यत्र उषसेति ग०।

---

(क) ऋ० ८, १०१, १। (ख) ऋ० ८, १०१, ५। (ग) ऋ० ८, १०१, ४। (घ) ऋ० ८, १०१, ७। (ङ) ऋ० ८, १०१, १३। (च) ऋ० ८, १०१, १४। (छ) ऋ० ८, १०१, १५। (ज) ऋ० ८, १०२, १। (झ) ऋ० ८, १०२, १४। (ञ) ऋ० ८, १०२, १४।

रहस्ये ब्राह्मणेऽप्येवं व्याख्यातं ह्यैतरेयके[१] ॥१२०॥
पावमानः स्तुतः सोमो नवमे त्विह मण्डले[२] ।
पवमानवदाप्यस्तु[३] समिद्ध[क] इति संस्तुतः ॥१२१॥
अग्न आयूंषी[ख]ति चासु तिसृष्वग्निर्निपातभाक् ।
अविता न[ग] इति त्वस्मिंस्तृचे पूष्णा[४] सह स्तुतः ॥१२२॥
आग्नेय्यौ द्वे ऋचावत्र यत्त[घ] इत्युत्तरे ततः ।
उभाभ्या[ङ]मिति सावित्री अग्निसावित्र्य[५]गुत्तरा ॥१२३॥
पुनन्तु मां[च] वैश्वदेवी आग्नेयी त्वृगुपमियम्[छ] ।
षडुत्तरा[६] य[ज] इत्यत्र[७] स्वाध्यायाध्येतृसंस्तवः ॥१२४॥

---

(१) प्रजा ह्येत्यपि वार्द्धर्षे इत्यादिसार्द्धश्लोकः क० ग० घ० च० चिह्नित-पुस्तकेषु न विद्यते ।
(२) नवमे मण्डलेऽर्षिभिरिति क० घ० च०, मण्डलर्षिभिरिति ग० ।
(३) पवमानवदाप्नोय इति ख० ।
(४) पूषेति ख० ङ० पुस्तकान्तरञ्च ।
(५) साग्न्यासावितीति ख० ।
(६) सप्तोत्तराः इति ख० ङ० पुस्तकान्तरञ्च ।
(७) उत्तरे च य इत्येवीति ग० ।

---

(क) ऋ० ९, ५, १ । (ख) ऋ० ९, ६६, १९ । (ग) ऋ० ९, ६७, २० । (घ) ऋ० ९, ६७, २३ । (ङ) ऋ० ९, ६७, २५ । (च) ऋ० ९, ६७, २७ । (छ) ऋ० ९, ६७, २९ । (ज) ऋ० ९, ६७, ३१ ।

सूक्ते निरुक्ते सूक्ते(क)ऽग्नि रक्षोहा घर्मसंस्तवः(१)।
सूर्य्यवद्यात्मवद्याच(२) पवित्र(ख)मिति चोच्यते ॥१२५॥
आर्भवस्तु भवेत्पाद ऋभुर्धीर(ग) इति स्तुतः।
निपातैस्तु त्रिभिः पादैस्त्रयो देवा इहोदिताः(३) ॥१२६॥
ब्रह्मा देवानां तिस्रोकास्त्रिभिस्त्वेतैर्तृचैश्चैः(४)।
सूर्य्यवद्यात्मवद्यायं(५) स्तूयते सोम(घ) इत्यपि(६) ॥१२७॥
अनावृष्ट्यां तु वर्त्तन्यां पथश्चर्षीञ्चोपतिः।
काले दुर्गे महत्यस्मिन् कर्म्मणा न जीवय ॥१२८॥
शकटं शाकिनी गावः ऋषिरस्यदनं वनं(७)।
समुद्रः पर्व्वतो राजा एवं जीवानहं वयन् ॥१२९॥
अथ सुवन्(८) शशंसास्य ऋषिराङ्गिरसः शिशुः।

(१) एतच्छ्लोकार्द्धं ङ० चिह्नितपुस्तके न पठितम्।
(२) सूर्य्यवर्चात्मवर्चापीति क० घ० च०।
(३) एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(४) तृचादृचैरिति क० ग० घ० च०।
(५) सूर्य्यवर्चात्मवर्चापीति क० घ० च०।
(६) एव वेति क० ग० घ० च०।
(७) ऋटरस्य नन्दनन्दनमिति ख०। एष श्लोकः क० ग० घ० च० चिह्नितपुस्तकेषु नापलभ्यते।
(८) सुवन्नेवेति क० ग० घ० च०।

(क) ऋ० ६, ७३, १। (ख) ऋ० ६, ८३, १। (ग) ऋ० ६, ८०, ३। (घ) ऋ० ६, १०७, ७।

सोऽस्य वज्रेण तान्याशु[1] शिरांसि चौग्रचिच्छिदत्[2] ॥१५१॥
तस्य यत्सोमपानन्तु मुखं सोऽभूत् कपिञ्जलः ।
कलविङ्कः सुरापानमन्नादं तित्तिरि[3]स्त्वभूत् ॥१५२॥
तं वागभ्यवदद्ब्राह्मी[4] ब्रह्महासि शतक्रतो ।
अपन्नं हतवान् यस्माद्[5] विश्वरूप पराङ्मुखम् ॥१५३॥
तमभ्यषिञ्चत् सूक्तेन ऋष्टि[6]राप[क] इति स्वयम् ।
सिन्धुद्वीपोपपत्त्यर्थं तस्याशौलस्य पाप्मनः ॥१५४॥
मैथुनार्थमभीप्सन्तौ प्रत्याचष्टे यमी यमं ।
ओचित् सखाय[ख][7] सवादे[8] विवस्वत्तु तयोस्तयोः ॥१५५॥
द्वया[ग]ग्नेये हविर्धाने युजे वा[घ]मन्न[9] संस्तुते ।
परेयिवांस[ङ]मित्यत्र स्तूयते मध्यमो यमः[10] ॥१५६॥

---

(१) सोऽस्य वज्रेण तस्याशु इति क० घ० च० ।
(२) तान्याशु शिरांसि चौग्रयाच्छिददिति ग० । शिरांस्येवाच्छिदत् प्रभु इति ख० पुस्तकान्तरञ्च ।
(३) तित्तिर इति ख० ङ० पुस्तकान्तरञ्च ।
(४) तोम्रिति क० घ० च० ।
(५) यस्त्वमिति क० घ० च० ।
(६) त्रृषिरिति क० ग० घ० च० ।
(७) सदोचिद्दिवीति क० ग० घ० च० ।
(८) सवादे इति क० घ० च० ।
(९) युजत्येतेनेति क० ग० घ० च० ।
(१०) इत्येवस्मिन् स्तूयन्ते युमस्त्रयः इति क० घ० च० ।

---

(क) ऋ० १०, ९, १ । (ख) ऋ० १०, १०, १ । (ग) ऋ० १०, ११,
(घ) ऋ० १०, १३, १ । (ङ) ऋ० १०, १४, १ ।

अथर्व्वाणोऽथ भगवः पितरोऽङ्गिरस[क]स्तु ह ।
षष्ठ्यां देवगणास्तत्र संस्तूयन्ते द्युभक्तयः ॥१५७॥
पितृभिश्चाङ्गिरोभिश्च संस्तुतो दृश्यते यमः ।
मन्त्रेषु वहुशः पादे विवस्वन्तं पिता हि सः ॥१५८॥
संस्कार्य्यप्रेतसंयुक्तैः पितृभिः स्तूयते यमः ।
प्रेहि प्रेह्री[ख]ति तिसृषु प्रेताग्निप उदाहृताः ॥१५९॥
पितॄणां हि पति र्देवो यमस्तस्मात् स सूक्तभाक्[1] ।
अतिद्रव[ग]ऋचे श्वानौ परं पित्र्यमुदीरितम्[2] ॥१६०॥
परेयैव[3] तु सूक्तेन श्मशाने कर्म्म शंसति[4] ।
पितृदेवासुराणाञ्च अभवन्नाग्रयस्त्रयः ॥१६१॥
हव्यकव्यवहौ चोभौ सह रक्षाश्विना सह[5] ।
तत्र मैन[घ]मिति त्वेतत्कव्यवाहनसंस्तुतिः[6] ॥१६२॥

---

(१) अथर्व्वाणोऽथ भगवः इत्यादिसार्द्धश्लोकचयं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नोपलभ्यते।

(२) उदीरितामिति क॰ ग॰ घ॰ च॰।

(३) उत्तरेणेति ग॰।

(४) एतच्छ्लोकार्द्धं ख॰ ङ॰ चिह्नितपुस्तकयोर्न पठितम्।

(५) सहरक्षा च नामयः इति ख॰ ङ॰ पुस्तकान्तरञ्च।

(६) त्वाह कव्यवाहनमेवचेति ख॰ ङ॰ पुस्तकान्तरञ्च।

---

(क) ऋ॰ १०, १४, ६। (ख) ऋ॰ १०, १४, ७। (ग) ऋ॰ १०, १४, १०।
(घ) ऋ॰ १०, १६, १।

इतराणि तु देवस्य[१] स्तुतिर्नांस्यासुरस्य च[२] ।
अभवन्मिथुनं त्वष्टुः सरण्यूस्त्रिशिराः सह[३] ॥१६३॥
स वै सरण्यूं प्रायच्छत् स्वयमेव विवस्वते ।
ततः सरण्व्यां[४] जज्ञाते यमयम्यौ विवस्वतः ।
तौ चाप्युभौ यमावेव ज्यायांस्ताभ्यान्तु वै यमः ॥१६४॥

इति बृहद्देवतायां षष्ठोऽध्यायः ॥६॥

---

(१) दैवस्येति ग॰, दैव्यस्येति ङ॰ ।
(२) त्विति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(३) सदृशी च हेति क॰ घ॰ च॰ ।
(४) सरण्या इति ख॰ ङ॰ पुस्तकान्तरञ्च ।

## अथ सप्तमोऽध्यायः ।



सृष्ट्वा[1] भर्तुः परोक्षन्तु सरण्यूः सदृशीं स्त्रियम् ।
निक्षिप्य मिथुनं[2] तस्यामश्वा भूत्वापचक्रमे[3] ॥१॥
अविज्ञानाद्विवस्वांस्तु तस्यामजनयन्मनुम् ।
राजर्षिरभवत् सोऽपि[4] विवस्वानिव तेजसा ॥२॥
स विज्ञाय[5] त्वपक्रान्तां सरण्यूमश्वरूपिणीम् ।
त्वाष्ट्रीं प्रति जगामाशु वाजी भूत्वाश्वलक्षणः[6] ॥३॥
सरण्यूश्च[7] विवस्वन्तं विदित्वा[8] हयरूपिणम्[9] ।

---

(१) दृष्ट्वेति क० घ० च० ।
(२) मैथुनमिति पाठः साधुः ।
(३) अश्वो भूत्वोपचक्रमे इति क० घ० च० ।
(४) राजर्षिरासीत् स मनुरिति ख० ङ० पुस्तकान्तरञ्च ।
(५) विज्ञाप्येति ग० ।
(६) सलक्षणाः इति क० घ० च०, स्वलक्षणः इति ग० ।
(७) तमिति ख० ङ० पुस्तकान्तरञ्च ।
(८) विज्ञायेति ख० ङ० पुस्तकान्तरञ्च ।
(९) हरिरूपिणमिति पुस्तकान्तरम् ।

मैथुनायोपचक्राम[१] तांश्च तत्राहरोह सः ॥४॥
ततस्तयोस्तु वेगेन शुक्रं तदपतद्भुवि ।
उपाजिघ्रच्च[२] सा त्वया तच्छुक्रं गर्भकाम्यया ॥५॥
आघ्रातमात्राच्छुक्रात्तु कुमारौ संबभूवतुः ।
नासत्यश्चैव दस्रश्च यौ सुताविश्विनाविति[३] ॥ ६॥
इतिहासमिमं यास्कः सरण्यूदेवते ब्रूते[४] ।
विवस्वतश्च त्वष्टुश्च त्वष्टे[क]ति सह मन्यते ॥७॥
पूषे[ख]ति पादौ पौष्णौ द्वौ त्वाग्नेया[५]वुत्तरौ तु यौ ।
स्यात्तृतीयोऽपि वा पौष्णस्तिस्रस्त्वाप्याः परास्तु याः[६] ॥८॥
अपां स्तुतिस्तृचैका[७] तथात्मास्तवनात्परा ।
स्तुतः परोक्षः सोमस्तु द्रप्स[ग] इत्युत्तरे तृचे ॥९॥
अब्देवताशीर्वादो[८] वा पयस्वत्यु[घ]त्तरा तु या ।

(१) मिथुनायोपचक्रामेति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(२) उपजिघ्रतीति क॰ घ॰ च॰ ।
(३) यौ तु तौ वाजिनाविति क॰ घ॰ च॰ ।
(४) स्यचाविति क॰ घ॰ च॰, त्वूचे इति ङ॰ पुस्तकान्तरञ्च ।
(५) द्वावाग्नेयाविति ङ॰ पुस्तकान्तरञ्च ।
(६) पौष्णस्त्वाप्यापरस्तृच इति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(७) अपां स्तुति स्तुतिस्त्वेकेति ख॰, अपां स्तुतिस्तुतस्त्वेकेति ङ॰ पुस्तकान्तरञ्च ।
(८) अब्देवत्याशीर्वादः इति ख॰ ङ॰, पुस्तकान्तरञ्च ।

(क) ऋ॰ १०, १७, १ । (ख) ऋ॰ १०, १७, ३ । (ग) ऋ॰ १०, १७, ११ ।
(घ) ऋ॰ १०, १७, १४ ।

चतस्रस्ताः स्तुतिर्मंत्योर[क]न्ते क्रियास्व[१] कर्म्मणि ॥१०॥
मृतभिष्टेभ्य आभास्त इमे[ख] ज्योगजीवनं पुनः।
इमं जीवेभ्य[ग] आभास्ते तेभ्यः परिधिकर्म्मणि[२] ॥११॥
यथा[घ] धान्युत्तरा त्वाष्ट्री ततो यान्या इमा[ङ]स्त्विति[३]।
स्त्रीणामाभिषमाभास्ते तथैवाञ्जनकर्म्मणि[४] ॥१२॥
उदीर्ष्व नारीत्यनया मृत[च]पत्नी तु रोहती[५]।
भ्राता कनीयान् प्रेतस्य निगदात्[६] प्रतिषेधति ॥१३॥
कुर्य्यादेतत् कर्म्म होता देवरो न भवेद्यदि।
प्रेतानुगमनं न स्यादिति ब्राह्मणशासनात् ॥१४॥
वर्णानामितरेषाञ्च स्त्रीधर्म्मोऽयं भवेन्न वा[७]।
शान्त्यर्थं धनुरादाने प्रेतस्यैव धनु[छ]र्जपेत्[८] ॥१५॥

(१) त्विति ङ॰।
(२) एष श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।
(३) यथधात्रुत्तरत्वाष्ट्री ततो यान्या इमात्स्वितीति ख॰ ङ॰ पुस्तकान्तरस्थ।
(४) तथा परिधिकर्म्मणीति क॰ ग॰ घ॰ च॰।
(५) मृतं पत्न्यनुरोहतीति पाठः साधुः। मृतमन्वारुरोहतीति क॰ घ॰ च॰।
(६) निगतेति क॰ घ॰ च॰, निगत्वेति ग॰।
(७) कुर्य्यादेतत् कर्म्म होतेति सार्द्धैकश्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नापद्यत।
(८) शान्त्यर्थं च जपत्यस्या, धनुरित्युत्तरामृचमिति क॰ ग॰ घ॰ च॰।

(क) ऋ॰ १०, १८, २। (ख) ऋ॰ १०, १८, ३। (ग) ऋ॰ १०, १८, ४।
(घ) ऋ॰ १०, १८, ५। (ङ) ऋ॰ १०, १८, ७। (च) ऋ॰ १०, १८, ८।
(छ) ऋ॰ १०, १८, ६।

यस्मादेताः प्रयुज्यन्ते श्मशाने चान्यकर्म्मणि(१)।
तस्मादेतृचस्या(२)स्य देवतां मृत्युरेव(३) तु ॥१६॥
मन्त्रेषु ह्यनिरुक्तेषु देवतां कर्म्मतो वदेत्।
मन्त्रतः कर्म्मतश्चैव प्रजापतिरसम्भवे(४) ॥१७॥
पराश्वतस्रो यास्त्वत्र उपसर्प(क)ति पार्थिवी।
तासां प्रयोगः प्रेतस्य अस्थिसञ्चयकर्म्मणि ॥१८॥
प्रतीचीने(ख)यथाह्नानि अपहत्येतराणि तु(५)।
अहःसु(६) पितरो दधुरित्याश्वास्ते(७)ऽन्ययाशिषः(८) ॥१९॥
अहःस्वागामिषु च मां द्रयतः(९) समजीवयन्(१०)।
निवर्त्तध्व(ग)मिदं सूक्तं(११) गवां केचिदपां विदुः ॥२०॥
अर्द्धर्चः प्रथमायास्तु(१२) अग्नीषोमीय उत्तरः।

(१) एते प्रयुज्यन्ते श्मशानेष्वन्तकर्म्मस्विति क० ग० घ० च०।
(२) तृचस्येति क० ग० च०।
(३) मृत्युमेवेति पाठः समीचीनः।
(४) इदं जगाविति क० घ० च०।
(५) प्रतीचीनमृचं त्वेतामपहत्योत्तरासु तत् इति ख० ङ० पुस्तकान्तरच।
(६) अहःस्विति ख० ङ० पुस्तकान्तरच।
(७) दधुरभ्याश्वास्ते इति क० घ० च०।
(८) दधुरभ्याश्वास्ते समाशिषः इति ग०।
(९) प्रयतः इति ख०।
(१०) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(११) इतीदन्त्विति क० ग० घ० च०।
(१२) चेति ख० ङ० पुस्तकान्तरच।

(क) ऋ० १०, १८, १०। (ख) ऋ० १०, १८, १४॥ (ग) ऋ० १०, १९, १।

| | | |
|---|---|---|
| P ngala Chhandah Sutra (Sans ) Fasc II—III @ /6/ each | Rs 0 | 1 |
| Pı thiraj Rasau (Sans ) Part I Fasc I Part II Fasc I—V @ /6/ each | 2 | 4 |
| D tto (English) Part II Fasc I | 0 | 12 |
| Prákṛ ta Lakshanam (Sans ) Fasc I | 1 | 8 |
| Parasara Smṛiti (Sans ) Vol I Fasc 1—8 Vol II Fasc 1—3 @ /6 each | 4 | 2 |
| Parasara, Inst tutes of (Engl sh) | 0 | 12 |
| Sra ta Sutra of Apastamba (Sans ) Fasc I—XII @ /6/ each | 4 | 8 |
| D tto As alayana, (Sans ) Fasc I—XI @ /6/ each | 4 | 2 |
| D tto Latyayana (Sans ) Fasc I—IX @ /6/ each | 3 | 6 |
| D tto Sa khayana (Sans ) Vol I Fasc 1—7 Vol II Fasc 1—? @ /6/ each | 3 | 6 |
| Sama Veda Samhitá (Sans ) Vols I Fasc 3—10 II 1—6 III 1—7 IV 1—6 V, 1—8 @ /6 each Fasc | 13 | 2 |
| Samkhya Sutra Vr tt (Sans ) Fasc I—IV @ /6/ each | 1 | 8 |
| Sah tya Darpana, (Engl sh) Fasc I—IV @ /6/ each | 1 | 8 |
| Sankhya Aphorisms of Kap la (Engl sh) Fasc I and II @ /6 each | 0 | 12 |
| Sarva Darsana Sangraha, (Sans ) Fasc II | 0 | 6 |
| Sankara V jaya (Sans ) Fasc II and III @ /6/ each | 0 | 12 |
| Sankhya Pr vachana Bhashya, Fasc III (English preface only) | 0 | 6 |
| S ri Bhashyam (Sans ) Fasc I—II @ /6/ each | 0 | 12 |
| Susruta Samh ta, (Eng ) Fasc. I and II @ /12 each | 1 | 8 |
| Ta tt r ya Aranya (Sans ) Fasc I—XI @ /6 each | 4 | 2 |
| D tto Brahmana (Sans ) Fasc I—XXIV @ /6 each | 9 | 0 |
| D tto Samh ta, (Sans ) Fasc IX—XXXV @ /6 each | 10 | 2 |
| D tto Prat sakhya, (Sans ) Fasc I—III @ 6 each | 1 | 2 |
| D tto and A tareya Upan shads (Sans ) Fasc II and III @ 6 each | 0 | 12 |
| Tandya Brahmana (Sans ) Fasc I—XIX @ 6 each | 7 | 2 |
| Tattva Cl nta nani, Vol I Fasc 1—9 Vol II 1—5 (Sans ) @ /6 each | 5 | 4 |
| Tul a Sat sa (Sans ) Fasc I—III @ /6 each | 1 | 2 |
| Uttara Na shadha, (Sans ) Fasc III V—XII @ 6 each | 3 | 6 |
| Uvasagadasao (Sans ) Fasc I—VI @ /12/ | 4 | 8 |
| Varáha Purana (Sans ) Fasc I—XIII @ /6/ each | 4 | 4 |
| Vayu Purana (Sans ) Vol I Fasc I—VI Vol II Fasc I—VII @ 6 each Fasc | 4 | 14 |
| Vishnu Smr ti (Sans ) Fasc I—II @ 6 each | 0 | 12 |
| Vivadaratnakara (Sans ) Fasc I—VII @ /6 each | 2 | 10 |
| Vrihannarad ya Purana (Sans ) Fasc I—V @ 6 | 1 | 14 |
| Yoga Sutra of Patanjali, (Sans & English) Fasc I—V @ 14 each | 4 | 6 |

*Tibetan Series*

| | | |
|---|---|---|
| Sher Phyin—Fasc I—V @ 1/ each | 5 | 0 |
| Rtogs brjod dpag bsam Khri S iñ (T betan & Sans ) Fasc I—II @ 1/ | 2 | 0 |

*Arabic and Persian Series*

| | | |
|---|---|---|
| Alamgirnamah w th Index (Text) Fasc I—XIII @ 6 each | 4 | 14 |
| Ain i Akbari (Text) Fasc I—XXII @ 1/ each | 22 | 0 |
| D tto (English) Vol I (Fasc I—VII) | 12 | 4 |
| Akbarnámah with Index, (Text) Fasc I—XXXVII @ 1/ each | 37 | 0 |
| Bad hshnamah w th Index, (Text) Fasc I—XIX @ 6/ each | 7 | 2 |
| Beale s Oriental B ograph cal D ct onary pp 291 4to th n p per | 4 | 8 |
| Catalogue of P rs an books and MSS in the l brary of A S B Fasc I | 1 | 0 |
| Dictionary of Arab c Technical Terms, and Append x Fasc I—XXI @ 1/ each | 21 | 0 |
| Farhang i Rash di (Text) Fasc. I—XIV @ 1/ each | 14 | 0 |
| F hrist Tusi, or Tusy s list of Shy ah Boo s, (Text) Fas I—IV @ /12/ each | 3 | 0 |
| Futuh ul Sham Waq di, (Text) Fasc. I—IX @ /6/ each | 3 | 6 |
| D tto Azadi, (Text) Fasc I—IV @ /6 each | 1 | 8 |
| Haft Asman, H story of the Pers an Masnawi (Text) Fasc. I | 0 | 12 |
| H story of the Cal phs, (English) Fas I—VI @ /12/ each | 4 | 8 |
| Iqbalnamah i Jahang ri, (Text) Fas. I—III @ 6/ each | 1 | 2 |
| Isabah, w th Supple nent, (Text) 51 Fas @ 12 each | 38 | 4 |
| Maas r ul Umara, Vol I, Fasc 1—9 Vol II 1—9 Vol III 1—3 @ /6/ each | 7 | 14 |
| M ghazi of Waq di, (Text Fasc. I—V @ 6 each | 1 | 14 |

# BIBLIOTHECA INDICA,

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 791.



# बृहद्देवता ।

# BRIHADDEVATÁ

AN INDEX TO THE GODS OF THE

RIG VEDA,

BY

SAUNAKA ACHARYA.

EDITED BY

RAJENDRALALA MITRA, C I E, LL D

FASCICULUS III

CALCUTTA

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY 57 PARK STREET

1891.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA.**

AND OBTAINABLE FROM

THE SOCIETY'S LONDON AGENTS, MESSRS TRUBNER & CO.
57 AND 59, LUDGATE HILL, LONDON, E C.

## BIBLIOTHECA INDICA.

### *Sanskrit Series*

| | | | |
|---|---|---|---|
| Advaita Brahma Siddhi Fasc. I—IV @ /6/ each .. | Rs | 1 | 8 |
| Agni Purána, (Sans.) Fasc II—XIV @ /6/ each .. | | 4 | 14 |
| Aitareya Aranyaka of the Rig Veda, (Sans.) Fasc I—V @ /6/ each | | 1 | 14 |
| Aniruddha's Commentary (English) Fasc. I .. .. | | 0 | 12 |
| Anu Bháshyam, Fasc I .. .. | | 0 | 6 |
| Aniruddha's Commentary (English) Fasc. I .. | | 0 | 12 |
| Aphorisms of Sandilya, (English) Fasc I | | 0 | 6 |
| Aphorisms of the Vedanta, (Sans.) Fasc VII—XIII @ /6/ each | | 2 | 4 |
| Ashtasahasrika Prajnaparamitá Fasc I—VI @ /6/ each .. | | 2 | 4 |
| Aśvavaidyaka, Fasc I—V @ /6/ each | | 1 | 14 |
| Avadána Kalpalata by Kshemendra (Sans & Tibetan) Vol I Fasc I—3 @ 1/ Vol. II, Fasc. I .. .. | | 4 | 0 |
| Bhamatí, (Sans.) Fasc I—VIII @ /6/ each | | 3 | 0 |
| Brahma Sutra (English) Fasc. I | | 0 | 12 |
| Brihaddevatá, (Sans.) Fasc I—II @ /6/ each | | 0 | 12 |
| Brihaddharma Puranam, Fasc I—II @ /6/ each | | 0 | 12 |
| Brihat Aranyaka Upanishad, (Sans.) Fasc VI VII & IX @ /6/ each .. | | 1 | 2 |
| Ditto (English) Fasc II—III @ /6/ each .. | | 0 | 12 |
| Brihat Sauhitá, (Sans.) Fasc II—III V—VII @ /6/ each .. | | 1 | 14 |
| Chaitanya Chandrodaya Nataka, (Sans.) Fasc II—III @ /6/ each .. | | 0 | 12 |
| Chaturvarga Chintamani, (Sans.) Vols I Fasc 1—11, II 1—25; III Part I Fasc 1—18, Part II Fasc 1—7 @ /6/ each .. | | 22 | 14 |
| Chhandogya Upanishad (English) Fasc II .. | | 0 | 6 |
| Daśarupa, Fasc II and III @ /6/ .. | | 0 | 12 |
| Gobhiliya Grihya Sutra, (Sans.) Fasc I—XII @ /6/ each .. | | 4 | 8 |
| Hindu Astronomy, (English) Fasc II—III @ /6/ each .. | | 0 | 12 |
| Kála Mádhava, (Sans.) Fasc I—IV @ /6/ .. | | 1 | 8 |
| Katantra, (Sans.) Fasc. I—VI @ /12/ each .. | | 4 | 8 |
| Katha Sarit Sagara, (English) Fasc. I—XIV @ /12/ each .. | | 10 | 8 |
| Kaushitaki Brahman Upanishads, Fasc II .. | | 0 | 6 |
| Kurma Purana (Sans.) Fasc I—IX @ /6/ each .. | | 3 | 6 |
| Lalita Vistara (Sans.) Fasc. II—VI @ /6/ .. | | 1 | 14 |
| Lalita-Vistara, (English) Fasc I—III @ /12/ each .. | | 2 | 4 |
| Madana Parijáta, (Sans.) Fasc. I—VIII @ /6/ each .. | | 3 | 0 |
| Manutika Sangraha, (Sans.) Fasc. I—III @ /6/ each .. | | 1 | 2 |
| Markandeya Purana, (Sans.) Fasc IV—VII @ /6/ each .. | | 1 | 8 |
| Márkandeya Purána (Eng.) Fasc I—II @ /12/ each .. | | 1 | 8 |
| Mimamsa Darsana, (Sans.) Fasc. II—XIX @ /6/ each .. | | 6 | 12 |
| Narada Pancharatra, (Sans.) Fasc IV .. | | 0 | 6 |
| Narada Smriti, (Sans.) Fasc I—III @ /6/ .. | | 1 | 2 |
| Nayavártikam, (Sans.) Fasc I .. | | 0 | 6 |
| Nirukta, (Sans.) Vol I, Fasc. 4—6, Vol II Fasc 1—7; Vol. III, Fasc 1—6; Vol. IV, Fasc 1—7 @ /6/ each Fasc .. | | 8 | 4 |
| Nitisara, or The Elements of Polity, By Kamandaki, (Sans.) Fasc II—V @ /6/ each .. | | | |
| Nyaya [illegible] .. .. | | | |

ऐन्द्री षष्ठी द्वितीयायामुभौ देवौ निपातितौ ॥२१॥
दशावरन्तु शान्त्यर्थं मानसं सूक्तमुत्तरम्[1] ।
चौष्ठेन्द्राणि कुहे[क]त्यत्र आग्नेयाभ्यां पराणि तु ॥२२॥
द्वयोऽस्यास्त्वाश्विन[2]स्त्वेक ऐन्द्राग्न[3] उत्तमे युवम्[ख] ।
भद्रं[ग] सौम्यं प्रत्नि[घ]पौष्णं चौष्ठेन्द्राणि पराण्यतः ॥२३॥
तेषामाद्येन मन्तः सन्[4] स्वानि कर्माणि शंसति ।
यथा चरति भूतेषु यथा वर्षति पाति[5] च ॥२४॥
सूक्ते तदस्मिन्नष्टाभिर्चर्ग्भि[6]रुक्तमभ्रु[ङ]रिति[7] ।
सन्ने[च]ति मरुतः स्तौति पर्ज्जन्यं स्तौत्यृ[8]गुत्तरा ॥२५॥
अग्निमिन्द्रञ्च सोमञ्च पीवानं मेघ[छ]मर्चति ।
पूर्व्वोऽर्द्धर्चोऽपर[9]स्तस्याः पर्ज्जन्यं वायुना सह ॥२६॥

---

(१) उच्यते इति क॰ ग॰ घ॰ च॰ ।
(२) द्वयोऽस्यास्त्वाश्विन इति ङ॰ ।
(३) ऐन्द्राग्नमिति क॰ ग॰ घ॰ च॰ ।
(४) स इति क॰ घ॰ च॰ ।
(५) वातीति ख॰ ङ॰ पुस्तकान्तरञ्च ।
(६) तदस्मिन्नर्द्धर्चे त्वृग्भिरिति क॰ ग॰ घ॰ च॰ ।
(७) अभूर्व्वितीति क॰ च॰, प्रभूर्व्वितीति ग॰ ।
(८) परमं स्तौति स्तौति वृषमिति क॰ घ॰ च॰ ।
(९) पूर्व्वोऽर्द्धर्चोत्तरः इति क॰ ग॰ घ॰ च॰ ।

---

(क) ऋ॰ १०, २२, १ । (ख) ऋ॰ १०, २४, ६ । (ग) ऋ॰ १०, २५, १ ।
(घ) ऋ॰ १०, २६, १ । (ङ) ऋ॰ १०, २७, ० । (च) ऋ॰ १०, २७, १५ ।
(छ) ऋ॰ १०, २७, १७ ।

विक्रोशमानास[क] इत्यग्निमुत्तरा सूर्यमर्चति[1]।
एतौ मे[ख]ऽयं च[ग] इत्येते स्तुतिरैवेन्द्रवज्रयोः[2] ॥२७॥
वृचे वृचे[घ] धनुरैन्द्र[3] देवाना[ङ]मिति तु त्र्यचः।
शीतोष्णवर्षदातारः पर्जन्यानिलभास्कराः ॥२८॥
अन्त्ये सूर्य्यानिलौ चोभौ स्तूयेते च पदे[4] सह।
सा ते जीवातु[च]रित्यस्यामिन्द्रो वा सूर्य्य एव वा ॥२९॥
विश्वो ह्य[छ]त्यत्र[5] संवाद[6] ऋषेः शक्रस्य चैव हि।
युग्मा एव तु शक्रस्य अयुग्मा एव तु लूषेः[7] ॥३०॥
लुषेन्द्रस्यागतान् देवान् दृष्ट्वा शक्रमनागतम्।
यज्ञे परोक्षवत् प्राह श्वशुरो नागतो मम ॥३१॥
यद्यागच्छेद्भचयेत् स[ज] धानाः सोमं पिबेदपि।
इति तस्या वचः श्रुत्वा तत्क्षणादैत्यवज्रभृत् ॥३२॥
तिष्ठन् वेद्यामुत्तरस्यामुच्चैराह परोक्षवत्[8]।

(१) स्तवतिति क॰ ग॰ घ॰ च॰।
(२) इता उभौ लेतावितिं स्तूयेते वज्रमुत्तरेति क॰ घ॰ च॰।
(३) ऐन्द्रीति क॰ घ॰ च॰, ऐन्द्रीमिति ग॰।
(४) पदे संस्तूयते इति ख॰ ङ॰ पुस्तकान्तरस्य।
(५) त्वन्यस्त्विति क॰ ग॰ घ॰ च॰।
(६) संवादमिति ख॰ ङ॰।
(७) युग्माः शक्रस्य विज्ञेया वसुकस्येतरा ऋचः इति ख॰ ङ॰ पुस्तकान्तरस्य।
(८) लुषेन्द्रस्यागतान् देवानित्यादिसार्द्धश्लोकद्वयं क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न दृश्यते।

(क) ऋ॰ १०,२७,१८। (ख) ऋ॰ १०,२७,२०। (ग) ऋ॰ १०,२७,२१।
(घ) ऋ॰ १०,२७,२२। (ङ) ऋ॰ १०,२७,२३। (च) ऋ॰ १०,२७,२४।
(छ) ऋ॰ १०, २८, १। (ज) ऋ॰ १०, २८, २।

तृतीयया चतुर्थ्या च प्रदेवचे(क)त्यपां स्तुतिः(१) ॥२३॥
अपां नपा(ख)दित्यनेन नामाग्नि(२)र्मध्यमः स्तुतः।
प्रति य(ग)द्वैश्वदेवन्त(३) त्तस्य प्रे(घ)त्यैन्द्रमुत्तरम्(४) ॥२४॥
वैश्वदेवी प्रमे(ङ)त्येका सं मे(च)त्यैन्द्रो(५)द्वृचः(६) परः॥
कुरु श्रवण(छ)मर्चन्ति(७) परे द्वे(८) चासदस्यवम् ॥२५॥
स्तुते मित्रातिथौ राज्ञि तं नपातस्तृषिः परैः।
उपमश्रवसं यस्य(ज) चतुर्भिः स व्यशोकयत् ॥२६॥
प्रावेपा(झ) इति सूक्तं यत्तदक्षस्तुति(९)रुच्यते।
अक्षा(१०)वान् द्वादशी स्तौति नवम्याद्या च(११) सप्तमी ॥२७॥

---

(१) प्रदेवचेत्यपां स्तुताविति ख० ग० ङ० पुस्तकान्तरञ्च।
(२) नामाग्निरिति क० घ० च०।
(३) त्विति क० ग० घ० च०।
(४) उत्तममिति ख० ङ० पुस्तकान्तरञ्च।
(५) तस्यास्त्वैन्द्रः इति क० घ० च०।
(६) द्वृच' इति ग०।
(७) स्वर्चन्तः इति ख० ङ० पुस्तकान्तरञ्च।
(८) परः षडिति क० घ० च०।
(९) तदक्षेति क० घ० च०।
(१०) तत्रेति ख० ङ०।
(११) चयेति ख० ङ० पुस्तकान्तरञ्च।

---

(क) ऋ० १०,३०,१। (ख) ऋ० १०, ३०, ४। (ग) ऋ० १०, ३०, १३।
(घ) ऋ० १०, ३२, १। (ङ) ऋ० १०, ३३, १। (च) ऋ० १०, ३३, २।
(छ) ऋ० १०, ३३, ४। (ज) ऋ० १०, ३३, ६। (झ) ऋ० १०, ३४, १।

चयोदशी कृषिं स्तौति कितवश्चानुशासति[१]।
ऋचां[२]स्तु शेषाव्निन्दन्ति अवुधं[क] वैश्वदेवते[३] ॥३८॥
सावित्रमेके मन्यन्ते महः अग्ने[ख] स्तवं परम्।
आचार्य्याः शौनको यास्को गालवश्चोत्तमामृचम्[४] ॥३९॥
नमः[ग] सौर्य्यमैन्द्रमस्मिन्[घ] सौर्य्ये षष्ठ्या तु याः स्तुताः[५]।
निपातिनी[६]स्ताः सूक्तान्ते वैश्वदेवो[७]ऽन्त्य तु तृचः[८] ॥४०॥
आश्विनानि तु य[ङ]स्त्रीणि ऐन्द्राण्यस्ते वसु[च] प्र च।
ऐन्द्राणामुत्तमा यास्तु स्तुतोऽर्द्धर्चे[९] बृहस्पतिः[छ] ॥४१॥
परे दिवः पर्य्या[ज]ग्नेये प्रथमस्योत्तमा तु या[१०]।

(१) एतच्छ्लोकार्द्धं ख॰ ङ॰ चिह्नितपुस्तकयोर्न विद्यते।
(२) ऋचाः इति ङ॰।
(३) वैश्वदेवतमिति पाठः साधुः।
(४) एष श्लोकः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितः।
(५) षष्ठ्या तु संस्तुतः इति ख॰ ङ॰ पुस्तकान्तरञ्च।
(६) निपातिन इति ख॰ ङ॰।
(७) सूक्तान्त्यो वैश्वदेव्यः इति क॰ ग॰ घ॰ च॰।
(८) तृचः इति ग॰।
(९) यास्तु चार्द्धर्चे त्विति क॰ ग॰ घ॰ च॰, याः सुस्ततोऽर्द्धर्चे इति ङ॰।
(१०) उत्तमेन त्विति ख॰ ङ॰ पुस्तकान्तरञ्च।

(क) ऋ॰ १०, ३५, १। (ख) ऋ॰ १०, ३६, १२। (ग) ऋ॰ १०, ३७, १। (घ) ऋ॰ १०, ३८, १। (ङ) ऋ॰ १०, ३९, १। (च) ऋ॰ १०, ४२, १। (छ) ऋ॰ १०, ४२, ११। १०, ४३, ११। १०, ४४, ११। (ज) ऋ॰ १०, ४५, १।

द्यावापृथिव्यौ विश्वे च पश्चा[1]द्दर्चेन संस्तुताः ॥४२॥
आसीत् काक्षीवती घोषा पापरोगेण दुर्भगा।
उवास षष्टिवर्षाणि पितुरेव गृहे पुरा ॥४३॥
आतस्थे महती चिन्ता न पुत्रो न पतिर्मम।
जरां प्राप्ता सुधा तस्मात् प्रपद्येऽहं शुभस्पती ॥४४॥
यथैतौ मामकस्तात आराध्यावाप यौवनम्।
आयुरारोग्यमैश्वर्यं सर्व्वंभूतहने विषम्[2] ॥४५॥
रूपवत्ताश्च सौभाग्यमहं तस्य सुता यदि।
ममापि मन्त्राः माद्रःस्युर्यैः स्तोष्येते मयाश्विनौ ॥४६॥
चिन्तयन्तीति सूक्तानि त्रीणि घोषा ददर्श सा।
स्तुतौ तावश्विनौ देवौ प्रीतौ तस्या भगान्तरम् ॥४७॥
प्रविश्य विजरारोगां सुभगाञ्चक्रतुश्च तौ।
भर्त्तारं ददतुस्तस्यै सुहस्त्यञ्च सुतं मुनिम्[3] ॥४८॥
ददतुस्तौ सुपर्णाभ्यां यन्नासत्येति[4] कीर्त्तिते।
काक्षीवत्यै च घोषायै तथा ददतुरोजसा[5] ॥४९॥

---

(१) पच्छो इति ख॰ ग॰ ङ॰।

(२) सर्व्वभूतहते धियमिति ङ॰।

(३) मनोरिति ङ॰।

(४) येनासत्येतीति ख॰।

(५) न तस्यां मातुरोनयेति ख॰ ङ॰ पुस्तकान्तरञ्च। आसीत् काक्षीवती घोषेत्यादि सप्त श्लोकाः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न सन्ति।

प्राजापत्यासुरी त्वासीद्विकुण्ठा नाम नामतः।
सेच्छतीन्द्रसमं पुत्त्रं तेपेऽथ सुमहत्तपः ॥५०॥
सा प्रजापतितः कामान्[1] लेभेऽथ विविधान् वरान्[2]।
तस्याश्चेन्द्रः स्वयं[3] जज्ञे जिघांसुर्दैत्यदानवान् ॥५१॥
एकदा[4] दानवैः सार्द्धं समरे समसज्जत।
जघान तेषां नवतीर्नव सप्त च सप्तधा[5] ॥५२॥
भित्त्वा[6] स्वबाहुवीर्य्येण हैमरौप्यायसीः[7] पुरीः।
हत्वा सर्व्वान् यथास्थानं पृथिव्यादिष्ववस्थितान्[8] ॥५३॥
राज्यं प्राप स दैत्येषु स्वेन वीर्य्येण दर्पितः।
देवान् बाधितुमारेभे मोहितोऽसुरमायया ॥५४॥
बध्यमानास्तु तेनापि असुरेणामितौजसा।
उपाधावन्नृषिश्रेष्ठ तत्प्रबोधाय सप्तगुम्[9] ॥५५॥

---

(१) काममिति क॰ घ॰ च॰।
(२) सुमहत्तपाः इति क॰ ग॰ घ॰ च॰।
(३) सुतः इति ख॰ ङ॰ पुस्तकान्तरे च।
(४) एकश्चेति क॰ घ॰ च॰।
(५) सप्तकानिति ख॰ ङ॰ पुस्तकान्तरे च।
(६) भित्त्वेति ख॰ ङ॰ पुस्तकान्तरे च।
(७) हैमवत्यायसीरिति क॰ घ॰ च॰।
(८) एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु न पठितम्।
(९) राज्यं प्राप स दैत्येष्वित्यादिश्लोकद्वयं क॰ ग॰ घ॰ च॰ चिह्नित पुस्तकेषु नापठ्यत।

पृथिव्यां कालकेयांश्च पौलोमांश्चैव धन्विनः।
तांश्च व्युच्छादयामास[1] प्रह्लादतनयानपि[2] ॥५६॥
ऋषिस्तु सप्तगुर्नाम तस्यासीत्सुप्रियः सखा।
स चैनमभितुष्टाव जज्ञेने[क]ति करे स्पृशन् ॥५७॥
ततः स[3] बुद्धा चात्मानं सप्तगुस्तुतिदर्पितः।
आत्मानमेव तुष्टाव अहं[4] भुव[ख]मिति त्रिभिः ॥५८॥
कीर्तयन् खानि कर्म्माणि यानि स्म कृतवान् पुरा।
यथाकरोत् स[5] वैदेहं ध्वंसं सोमपतिं[6] नृपम् ॥५९॥
वसिष्ठशापादभवद्विदेहो[7] नृपतिः पुरा।
इन्द्रप्रसादादीजे स[8] मन्त्रैः[9] सारस्वतादिभिः ॥६०॥
*सम्भृतां शक्तिमत्ताच्च शत्रूणामपरिक्रियाम्*[10]।

---

(१) व्युच्छादयन् सर्व्वानिति ख० ङ० पुस्तकान्तरञ्च।
(२) दिवीति क० ग० घ० च०।
(३) विति ख० ङ० पुस्तकान्तरञ्च।
(४) चाहमिति ख० ङ० पुस्तकान्तरञ्च।
(५) चेति क० ग० घ० च०।
(६) व्यसं सोमपतिरिति क० घ० च०, सौमपतिमिति ङ०।
(७) वैदेह इति ग०।
(८) चेति क० ग० घ० च०।
(९) मन्त्रैरिति पुस्तकान्तरम्।
(१०) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नेष्यते।

---

(क) ऋ० १०, ४७, १। (ख) ऋ० १०, ४८, १।

विष्णुलोकेषु[१] चैश्वर्य्यं प्रभुत्वं भुवनेषु च ॥६१॥
प्र वो महे[क] इति त्वस्मामात्मन्ये[२] वार्यवन् स्वयम्[३]।
वैश्वानरे गृहपतौ यविष्ठेऽग्नौ च पावके ॥६२॥
वषट्कारेण वृक्णेषु अग्नौ च[४] सहसः सुतौ[५]।
अपचक्राम देवेभ्यः सौचीकोऽग्नि[६]रिति श्रुतिः ॥६३॥
स प्राविशदपक्रम्य ऋतूनपो वनस्पतीन्।
ततोऽसुराः प्रादुरासन्नष्टेऽग्नौ हव्यवाहने ॥६४॥
तेऽग्निमेवान्वैच्छन्त देवा हत्वासुरान् युधि।
तन्तु दूराद्यमश्चैव वरुणश्चान्वपश्यताम् ॥६५॥
उभावेनं समादाय देवानेवाभिजग्मतुः।
दृष्ट्वा देवास्तेनमूचुरग्ने हव्यानि नो वह ॥६६॥
वरं गृहाण मत्तस्व चित्रभानो भजस्व न.[७]।
प्रत्युवाचाथ तानग्निर्विश्वे देवा यदात्थ माम्[८] ॥६७॥
तत्करिष्ये जुषतान्तु होत्र[९] पञ्च जना मम।

(१) त्वषु सर्व्वेष्विति क॰ ग॰ घ॰ च॰।
(२) ब्यात्मनः इति क॰ ग॰ घ॰ च॰।
(३) वीर्य्यमच्चयमिति ग॰।
(४) त्विति ङ॰ पुस्तकान्तरञ्च।
(५) भ्राढवर्गौ सह सुताविति ख॰ ग॰, सहसस्तते इति ङ॰।
(६) श्वभिचकाम सौचिको भयादग्निरिति क॰ ग॰ घ॰ च॰।
(७) चेति क॰ घ॰ च॰।
(८) वैश्वानराय दातु मेति क॰ घ॰ च॰, विश्वे मूत यथाक्रमादिति ग॰।
(९) होत्रमिति ख॰ ग॰ ङ॰ पुस्तकान्तरञ्च।

(क) ऋ॰ १०, ५०, १।

ग्राम्यमुख्यः[१] प्रणीतश्च पुत्रो गृहपतेश्च यः ॥६८॥
उत्तरो दक्षिणश्चाग्निरेते पञ्च जनाः स्मृताः।
मनुष्याः पितरो देवा गन्धर्व्वोरगराक्षसाः ॥६९॥
यास्कौपमन्यवा[२]वेतानाहतुः पञ्च वै जनान्।
निषादपञ्चमान् वर्णान् मन्यते शाकटायनः ॥७०॥
ऋत्विजो[३] यजमानश्च शाकपूणिस्तु मन्यते।
[४]आयुरस्तु च मे दीर्घं हवींषि विविधानि च ॥७१॥
अरिष्टिः पूर्व्वजानाञ्च भ्रातृणामध्वरेऽध्वरे[५]।
प्रयाजा[क]श्चानुयाजाश्च घृतं सोमे पयः[६] पशुः ॥७२॥

(१) ग्रामामुख्य० इति ग०।
(२) यास्कोपमन्यवाविति क० घ० च०।
(३) ऋत्विजेति ख०।
(४) ख०चिह्नितपुस्तके आयुरस्तु च मे दीर्घमिति श्लोकार्द्धात्प्राक्,—

होताध्वर्युश्च उद्गाता ब्राह्मणो तान् वदाति तान्।
चक्षुः श्रोत्रं मनो वाक् च प्राणश्चेत्यात्मवादिनः।
गन्धर्व्वाप्सरसो देवा मनुष्याः पितरस्तथा।
सर्पाश्च ब्राह्मणाश्चैव श्रूयन्ते ह्यैतरेयके।
ये चान्ये पृथिवीजाता देवाश्चान्येऽप वज्रिणो।

इत्यधिकं पठितम्।

(५) भ्रातृणामेवमध्वरे इति ख०।
(६) च यः इति ख० ग०।

(क) ऋ० १०, ५१, ८।

मद्दैवत्यानि[१] वै सन्तु यज्ञो मद्देवतोऽस्तु च[२]।
नवाग्ने यज्ञ [क]इत्येतत् प्रत्यर्द्धं[३] स्विष्टकृच्च सः[४] ॥७३॥
तस्य[५] त्रीणि सहस्राणि नव त्रीणि [ख]शतानि च।
चिश्चैव तु देवानां सर्व्वानेव[६] वरान् ददुः ॥७४॥
ततोऽग्निः सुमनाः प्रीतो विश्वैर्देवैः पुरस्कृतः।
विधूयाङ्गानि यज्ञेषु चक्रे होत्र[७]मतन्द्रितः ॥७५॥
भ्रातृभिः सहितः प्रीतो दिव्यात्मा हव्यवाहनः।
तस्यास्थि देवदार्व्वासीन्मेदोमांसञ्च गुग्गुलुः ॥७६॥
सुगन्धि तेजन स्नायुः[८] शुक्रं रजतकाञ्चने।
रोमाणि काशाः[९] केशाश्च कुशाः कूर्म्मा नखानि च ॥७७॥
अन्त्राणि शैवलास्त्वेव मज्जा सिकतशर्कराः[१०]।

---

(१) मे दैवत्यानीति ख०, मद्दैवत्यान्विति ग०, मद्दैवत्यानीति क० घ० च०।
(२) न्वचः इति ग०।
(३) प्रत्यार्द्धीति ग०।
(४) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(५) यस्येति क० ग० घ० ङ० च०।
(६) सर्व्वाण्येतानिति ख०।
(७) होत्रमिति ग०।
(८) सुचिति क० घ० च०, सुगन्धं तजनत् प्राशुरिति ख०।
(९) कोशाविति क० घ० च०।
(१०) शिकतशर्कराः इति ख०, सिकतशार्कराः इति ग०।

---

(क) ऋ० १०, ५१, ९। (ख) ऋ० १०, ५२, ६।

असृक्पित्तञ्च विविध धातवो गैरिकादय ॥७८॥
एवमग्निश्च देवाश्च सूक्तैर्मह(क)दिति त्रिभि ।
समूदिरे(ख) परे तस्मादैन्द्रे सूक्ते तु ता स्तुते ॥७९॥
विधुन्दद्राण(ग)मित्यस्या सूर्याचन्द्रमसौ स्तुतौ ।
प्राणवच्चात्मवच्चापि स्तुतिरप्यत्र दृश्यते(१) ॥८०॥
इद (घ)दे वैश्वदेवे च द्वितीयेऽर्य्यमणो तृच(२) ।
प्रथमैन्द्री द्वितीयाग्नेय्यन्त्या तत्सोमदेवता(३) ॥८१॥
(४)जीवावृत्ति सवन्धो(५)र्वा यदि वा मनस स्तव ।
राजासमातिरैच्छाको(६)रथप्रोष्ठ(७) पुरोहितान् ॥८२॥

---

(१) एष श्लोक क० ग० घ० च० चिह्नितपुस्तकेषु न पठित ।
(२) गिरिसा स्तुतिरिति ख०, तृचः इति ग० ।
(३) प्रथमा लैङ्गाग्नेन्द्राग्नी चालिङ्ग्यामपरन्तु यदिति क० घ० च० ।
(४) ख० चिह्नितपुस्तके जीवावृत्तिरिति श्लोकात प्राक्—
   अपि स्तौति पितृनेतदालिङ्ग्यञ्च यदुत्तरम् ।
   सूक्तमाख्यानसयुक्त यक्षकामस्य मे शृणु ॥
   सम्मोहान्नष्टसञ्ज्ञस्य प्रचूणा दभिद्रुतस्य तु ।
  इति सार्द्धैकश्लोकोऽधिक पठित ।
(५) सुबन्धोरिति पाठ साधु पत्र तथादर्शनात् ।
(६) ऐक्ष्वाकुरिति क० घ० च० ।
(७) रथप्रोष्ठा इति ख०, रथप्रोष्ठानिति ग० ।

---

(क) ऋ० १०, ५१, १ । (ख) ऋ० १०, ५७, १ । (ग) ऋ० १०, ५५, ५ ।
(घ) १०, ५६, १ ।

सूक्तेनाथ सुव[१]वग्निं द्वैपदेन यथाविषु[२]।
अग्निरित्यब्रवीद्देता[३]नयमन्तः परैलसून्[४] ॥८५॥
सुबन्धुरस्य चैक्ष्वाको[५]मया गुप्तो हितार्थिना।
सुबन्धवे प्रदायासून्[६]जीवेत्युक्ता च पावकः ॥८६॥
स्तुतो गौपायनैः प्रीतो जगाम त्रिदिवं प्रति।
अयं माते[क]ति दृष्टास्ते[७] सुबन्धोरसुमाह्वयन् ॥८७॥
शरीरमभिनिर्दिश्य सुबन्धोः पतितं भुवि।
सूक्तशेष जगुस्तस्य चेतसो धारणाय ते ॥८८॥
लब्धासुस्थाय[ख]मित्यस्तां पृथक्पाणिभिरस्पृशन्।
षड्दि[ग] वैश्वदेवानि द्वितीयेऽङ्गिरसां स्तुतिः[८] ॥८९॥
जन्म कर्म च सख्यञ्च[९] इन्द्रेण सह कीर्त्तयन्।

(१) सूक्तेनैषां स्तुवन्निति क॰ ग॰ घ॰ च॰।
(२) द्वैपद यत्तदचिष्विति क॰ घ॰ च॰।
(३) देवानिति ग॰।
(४) परा ब्यसूरिति क॰ ग॰ घ॰ ङ॰ च॰।
(५) सुबन्धोरस्य चैक्ष्वाकोरिति क॰ ख॰ घ॰ च॰।
(६) असूमिति ख॰ ग॰।
(७) प्रेषेणेति ख॰।
(८) ऋषिरिति क॰ घ॰ च॰।
(९) सख्याश्चेति क॰ घ॰ च॰।

(क) ऋ॰ १०, ६०, ७। (ख) ऋ॰ १०, ६०, १२। (ग) ऋ॰ १, ६१, १।

स्तौति प्रनून[क]मित्याद्याः सावर्णस्य मनोः स्तुति. ॥१००॥
तस्यैव चायुषोऽर्थाय देवान् स्तौत्यभयादृषि ।
सुत्रामाण [ख]मद्धिमूयु[१] दृचस्य[ग]त्यदितेः स्तुतिः ॥१०१॥
पथ्यास्वस्ति स्वस्ति [घ]स्वद्धिस्वस्तितो मरुता स्तुति. ।
मारुतीमृचमन्याऽहैत्युक्तमाध्वर्य्यवेषु हि ॥१०२॥
या गो[ङ]रिति तथैवाम्या स्तूयते मध्यमानुवाक् ।
मित्राय मैत्रावरुणी भुज्युमहस[च] आश्विनी[२] ॥१०३॥
स्तौत्यापि च मनु स्वस्ति द्रुचे[३] वाचञ्च मध्यमा ।
अयेमा[छ] द्वे बार्हस्पत्ये भद्रा [ज]आग्नेयमाश्रिय.[४] ।१०४॥
यज्ज्योतिरमृत ब्रह्म यद्योगात्समुपास्नुते ।
तज्ज्ञानमभितुष्टाव सूक्तेनाथ बृहस्पति ॥१०५॥
जीवनार्थं प्रयोगस्तु मन्त्राणा प्रतिषिध्यते ।
वेदतत्त्वार्थविज्ञान प्रायेणाच हि दृश्यते ॥१०६॥

---

(१) मद्धिमूयौति ख० ।
(२) स्तौति प्रनूनमित्याद्या इत्यादि भुज्युमहस आश्विनीयन्तपाठ क० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(३) द्रुचे इति ग० ।
(४) अथामेयमथाश्रय इति क० घ० च०, वदा आग्नेयमाप्रिया इति ख० ।

---

(क) ऋ० १०, ६२, ८ । (ख) ऋ० १०, ६३,१० । (ग) ऋ० १०, ६४, ५ ।
(घ) ऋ० १०, ६३,१५ । (ङ) ऋ० १०, ६५,६ । (च) ऋ० १०,६५, १२ ।
(छ) ऋ० १०, ६७,१ । (ज) ऋ० १०, ६८, १ ।

आचार्य्याः केचिदित्याङ्करत्र वाग्विदुषां स्तवः।
ययाभिर्निन्द्यते[१] लृग्भिः सूक्तेऽन्याभिरनर्थवित् ॥१०७॥
ये देनामन्वविन्दन्त विद्वांस च्चषितां शचीम्[२]।
तथा च ह्यभजयज्ञे तदृचोक्तं[३] तृतीयया ॥१०८॥
प्रशस्यते द्रप्सम्यां[४] तु विद्वानुत्तमया लृचा[५]।
यज्ञे मह्वर्लिंजामाह विनियोगश्च कर्म्मणाम् ॥१०९॥
परे तु स्तूयते चोक्ता अष्टौ[क] चैवादितेः[६] सुताः।
धातेन्द्रो वरुणो मित्रः अंशः सूर्य्योऽर्य्यमा भगः ॥११०॥
ऐन्द्रेऽजनिष्ठाः[७] सूक्ते द्वे प्राख्[ख]त्यच परन्तु यत्।
तत्र प्राच्यः प्रतीच्यश्च स्रवन्त्यो दक्षिणाश्च याः[८] ॥१११॥
ताः सप्त सप्तकैर्वर्गैः संस्तूयन्ते प्रधानतः[९]।

(१) तथाहिं निन्दते इति ख॰।
(२) विद्वासर्मिगता सतीमिति ख॰, विद्वासर्मिगता सतीमिति ग॰।
(३) उक्त इति क॰ घ॰ च॰।
(४) द्रप्सम्येति ग॰।
(५) तृचेति ख॰ ग॰।
(६) चास्य ञ्चायौ चादितये इति क॰ घ॰ च॰।
(७) ञनिष्ठा इनि क॰ घ॰ च॰।
(८) दक्षिणाश्चेति ख॰, दक्षिणाश्चया इति ग॰।
(९) दशकैर्भि संस्तूयन्ते विभक्तय इति ग॰।

(क) ऋ॰ १०, ७२, ८। (ख) ऋ॰ १०, ७५, १।

यावृणामा वो[क] मारुते द्वे अभ्रप्रुष[ख] इति स्मृते ॥११२॥
अपश्य[ग]मिति चाग्नेये य इमा[घ] वैश्वकर्म्मणे।
मान्यवे यस्त[ङ] इत्येते परं यत्तु मम व्रते ॥११३॥
तदाशीर्वादवङ्गलं स्तौति विश्वान् दिवौकसः।
परा[च] कदा स आग्नेयं[१] य[छ]दु[ज]दित्यष्टकं परम् ॥११४॥
मैत्रावरुण्यृक्तत्रास्ति चतुर्थ्यैन्द्राण्युपोत्तमा।
सावित्री चैव सूर्य्या च सैव पत्नी विवस्वतः ॥११५॥
स्तुता वृषाकपायी[झ]ति उषा इति च योच्यते[२]।
उषा ह्येषा[३] त्रिधात्मानं विभज्य प्रैति[४] गोपतिम् ॥११६॥
उषा[५] पुरोदये भूत्वा सूर्य्या मध्यन्दिने स्थिते।
भूत्वा वृषाकपायी च दिनान्तेऽप्यनुकीर्तिनी[६] ॥११७॥

---

(१) आग्नेये इति क॰ ग॰ घ॰ च॰।
(२) च पूषा इवितयोच्यते इति ख॰।
(३) एषेति क॰ ग॰ घ॰ च॰।
(४) अप्येतीति ख॰।
(५) उषाः इति क॰ घ॰ च॰।
(६) वृषाकपायीति दिनान्तेष्वेव गच्छतीति ख॰।

---

(क) ऋ॰ १०, ७६, १। (ख) ऋ॰ १०, ७७, १। (ग) ऋ॰ १०, ७९, १।
(घ) ऋ॰ १०, ८२, १। (ङ) ऋ॰ १०, ८३, १। (च) ऋ॰ १०, ८५,२९।
(छ) ऋ॰ १०, ८५,१४। (ज) ऋ॰ १०,८५, २१। (झ) ऋ॰१०, ८६,१३।

सत्यसूर्य्यर्त्तुसोमानां सौर्य्यायत्र ह्युगुच्यते ।
पराभिस्तिसृभिस्तु(१)भिस्त्व्यते सोम औषधः(२) ॥११८॥
विश्वाष्टमुत्तरा त्वाशास्त्वक् चन्द्रमसमर्चति ।
सूर्य्याये भाववृत्तन्तु रैभी(क)त्यष्टाभिरुच्यते ॥११९॥
य(ख)दृश्विनौ द्वृच(३)स्तौति सूर्य्य(४) एवोत्तरार्चति ।
सप्तदृग्नी वैश्वदेवी सूर्य्याचन्द्रमसौ परा ॥१२०॥
परस्याः प्रथमौ पादौ सौर्य्यौ चान्द्रमसौ परौ ।
श्रौर्णनाभो द्वृचे त्वश्विचश्विनौ मन्यते स्तुतौ ॥१२१॥
सूर्य्याचन्द्रमसौ तौ हि प्राणापानौ च तौ स्तुतौ ।
अहोरात्रे(५) च तावेव स्यातां तावेव रोदसी ॥१२२॥
अप्सुवाते हि तौ लोकाञ्ज्योतिषा च रसेन च ।
पृथक् पृथक्के चरतु(६) दक्षिणेनोत्तरेण च ॥१२३॥

---

(१) त्वचेति ख०।
(२) औषधिरिति ग०।
(३) घृच इति ग०।
(४) सूर्य्यमिति पाठः साधुः।
(५) अहोरात्राविति ख०।
(६) तौ चरतः इति पाठः सङ्गतः। चेरतुरिति ग०।

---

(क) ऋ० १०, ८५, ६। (ख) ऋ० १०, ८५, १४।

(१)सुकिंशुक(क)मिति तस्यां सूर्य्यामारोहतीं पतिम्।
स्तौति विश्वावसुश्चैव हृचे(२) गन्धर्व्वमुत्तरे ॥१२४॥
अनुचरा(ख) इत्यनया यौ तौ(३) स्तौतीह दम्पती।
गृहान् प्रपद्यमानान्तु पराभिः पञ्चभिर्वधूम् ॥१२५॥
वाससश्च वधूनाञ्च वरदानं प्रचक्षते।
ततस्त्रिभिर्विरागस्य यद्वध्व(ग)(४) इति वाससः ॥१२६॥
तद्युक्तया तया स्वर्गी निद्रिते पत्युरेव च।
ऋगुत्तरा तृतीयस्य विभवे सति वाससः ॥१२७॥
अन्यत्र मैथुनाद्भर्त्तुर्हरणं प्रतिषिध्यते।

---

(१) ख॰ चिह्नितपुस्तके सुकिंशुकमिति श्लोकात् प्राक्,—
सूर्य्यः सरति भूतेषु सुवीरः पतितानि वा।
सुहृत्सापाथ्येषु सर्व्वकार्य्याणि स वदत्॥
घास द्रवति वाचा य श्वावनिन्द्रतुमुच्यते।
वमेषन्ने समेवानि निर्म्मितेऽथ चन्द्रमोः॥
इत्यधिकपाठोऽस्ति।

(२) हृचे इति ग॰।

(३) यात्वे इति ख॰।

(४) यद्वध्वइति वाससः इत्यादि ऋगुत्तरा तृतीयस्येत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु न विद्यते।

---

(क) ऋ॰ १०, ८५, २०। (ख) ऋ॰ १०, ८५, २३। (ग) ऋ॰ १०, ८५, ३०।

ये(क) यज्ञनाशिनीं स्तौति हृचे[१]मा परिपन्थिनः ॥१२८॥
अष्टमे य(ख)दिति त्वाह यादृग्वाधूयमर्हति।
आशास्ते[२] चैव विविधं ज्ञातिभ्यश्चानुशासनम्[३] ॥१२९॥
यद्वा स्त्री भाववृत्ति[४]श्च परया तत्र कथ्यते।
पराभिराशीराशास्ते पृथक् ताभ्यः सहैव च। ॥१३०॥
मन्त्रा वैवाहिका ह्येते निगद्यन्ते नृणामपि।
आशिंष्या यजमानाश्च यथारूपं विशेषतः ॥१३१॥
प्रत्यृचं प्रतिकीर्त्यन्ते देवताश्चेह यासु याः[५]।

(१) हृचे इति ग॰।
(२) आशास्तीति क॰ ग॰ घ॰ च॰।
(३) आनिभिश्चानुवासनमिति ख॰।
(४) भावक्लिप्तिरिति क॰ घ॰ च॰।
(५) ख॰ चिह्नितपुस्तके, पराभिराशीराशास्ते इत्यादि देवताश्चेह यासु या इत्यन्तपाठो न विद्यते। तत्र अस्मिन् स्थले,
 गृभ्णामि(ग)तदिवायोऽस्तमन्त्र धनमाशिषः।
 आशास्ते परयास्तस्या संयोगार्थास्तयाशिष॰॥
 पराभिराशिषः शास्ते पृथक् तासां सह क्वचित्।
 अघोरे(घ)ति हृचे तस्याः स(ङ)मिहेति द्वयोर्द्वयोः॥
 आना प्रजापते प्रेमानस्य(च) यथारूपं विशेषतः।
 प्रत्यृचं कीर्त्यते देवता तेषु भाववृत्ततः॥
 इति पाठो वर्त्तते।

(क) ऋ॰ १०, ८५,२१। (ख) ऋ॰ १०,८५,२५। (ग) ऋ॰ १०, ८५,३६। (घ) ऋ॰ १०, ८५,४४। (ङ) ऋ॰ १०,८५,४६। (च) ऋ॰ १०, ८५, ४७।

वदेत्तां[१] देवतां तासु नराशंसीर्वदेत वा ॥१२२॥
उषसः सर्व्वया चैता भाववृत्तं प्रचक्षते।
सूर्य्यया सह सूक्तेऽस्मिन् पादश्चैवात्र लक्ष्यते ॥१२३॥
वि हि[क] वार्षाकपं सूक्तमसौ तु[२] कपिलो वृषा।
इन्द्रः प्रजापतिश्चैव विश्वस्मादिन्द्र उत्तरः[ख] ॥१२४॥
रक्षोहणा[ग]दि चाग्नेयं[३] त्रीन् सौर्य्यग्नीन् परं हविः[घ]।
इनश्च मध्यमश्चैव असौ वैश्वानरश्च यः ॥१२५॥
इन्द्रं[ङ] पुरुषसूक्त[च]ञ्च[४] अन्यया पुरुषस्य तु।
यथैनमभजन् साध्या[५] यज्ञार्थं सोऽर्थ[६] उच्यते ॥१२६॥
आपान्तमन्यु[छ]रित्यस्यां[७] स्तुतः सोमस्तु[८] दृश्यते।

---

(१) वदेतामिति ख० ग०।
(२) ह्वीति ग०।
(३) वामेयमिति क० घ० च०।
(४) तथैन्द्रात्पौरुषं सूक्तमिति ख०।
(५) साध्येति ख०।
(६) सार्थं इति ख०।
(७) इत्येतामिति ख०।
(८) घर्मेति ख० ग०।

---

(क) ऋ० १०, ८६, १। (ख) ऋ० १०, ८६, ५। (ग) ऋ० १०, ८७, १।
(घ) ऋ० १०, ८८, १। (ङ) ऋ० १०, ८९, १०। (च) ऋ० १०, ९०, १।
(छ) ऋ० १०, ८९, ५।

सालोक्यात्साहचर्य्याद्वा स्तूयते सोम एव वा ॥१३७॥
निपातभाजं सोमञ्च श्रद्धां रथीतरोऽब्रवीत्।
ऐन्द्रो ह्येष निपातस्तु[1] स्तुतोऽग्निररुणेन[2]सः ॥१३८॥
यज्ञस्य वो[क] वैश्वदेवे प्रैत[ख] इत्युत्तरन्तु यत्।
तत्रार्बुदस्तु ग्रावाणं मूर्त्तिमन्तमिवार्चति ॥१३९॥
पुरूरवसि राजर्षावप्सरास्तूर्व्वशी पुरा।
न्यवसत् संविदङ्कृत्वा तस्मिन् धर्मञ्चचार च ॥१४०॥
तया तस्य च संवास[3]मसूयन् पाकशासनः।
पैतामहस्यानुरागमिन्द्रवज्ञापि[4] तस्य तु ॥१४१॥
स तयोस्तु वियोगार्थ[5] पार्श्वस्थं वज्रमब्रवीत्।
प्रीतिभिन्ध्यनयो[6]र्वज्र मम चेदिच्छसि प्रियम् ॥१४२॥
तथेत्युक्त्वा तयोः प्रीतिं वज्रो भिदति[7] मायया।
ततस्तया विहीनस्तु चचारोन्मत्तवन्नृप ॥१४३॥

---

(१) ऐन्द्रेषु हि निपातोऽयेति क॰ ग॰ घ॰ च॰।
(२) वरुणेन सः इति ख॰।
(३) संवादमिति क॰ घ॰ च॰।
(४) सानुरागमिन्द्रवज्रापीति क॰ ग॰ घ॰ च॰
(५) विभागार्थमिति क॰ घ॰ च॰।
(६) प्रीतिम्भिद तयोरिति ग॰।
(७) भिनत्तीति साधु।

---

(क) ऋ॰ १०, ९२, १। (ख) ऋ॰ १०, ९४, १।

वदेत्तां(१) देवतां तासु नराशंसीर्वदेत वा ॥१२२॥
उषंसः सर्व्वथा चैता भाववृत्तं प्रचक्षते।
सूर्य्यया सह सूक्तेऽस्मिन् पादश्चैवात्र लक्ष्यते ॥१२३॥
वि हि(क) वार्षाकपं सूक्तमसौ तु(२) कपिलो वृषा।
इन्द्रः प्रजापतिश्चैव विश्वस्मादिन्द्र उत्तरः(ख) ॥१२४॥
रक्षोहणा(ग)दि चाग्नेयं(३) त्रीन् स्तौत्यग्नीन् परं हविः(घ)।
इनञ्च मध्यमञ्चैव अग्नौ वैश्वानरञ्च यः ॥१२५॥
इन्द्रं(ङ) पुरुषसूक्त(च)ञ्च(४) अन्यया पुरुषस्य तु।
यथैनमभजन् साध्या(५) यज्ञार्थं सोऽर्य(६) उच्यते ॥१२६॥
आपान्तमन्यु(छ)रित्यस्यां(७) स्तुतः सोमस्तु(ज) दृश्यते।

---

(१) वदेतामिति ख० ग०।
(२) ह्यीति ग०।
(३) वामेयमिति क० घ० च०।
(४) तथैन्द्रात्पौरुषं सूक्तमिति ख०।
[illegible] ख०।
(५) कनीयां [illegible]
(६) भारवाविति [illegible]
(७) स्वगदोषिणौ राजपुत्रः इति [illegible]
(८) व्यार्थिंषेयस्तुतः इति ग०।

---

(क) ऋ० १०, ८५, १। (ख) ऋ० १०, ८६, १। (ग) ऋ० १०, ८७, १।

राज्येन च्छन्दयामासुः[1] प्रजाः स्वर्गं गते गुरौ।
स मुहूर्त्तमिव ध्यात्वा प्रजास्ताः प्रत्यभाषत ॥ १५० ॥

इति बृहद्देवतायां सप्तमोऽध्यायः।

---

(१) छन्दयेयुस्तस्तु राज्यमिति क॰ ख॰ घ॰।

## अथाष्टमोऽध्यायः ।

न राज्यमहमर्हामि नृपतिर्वोऽस्तु शन्तनुः ।
तथेत्युक्त्वाभ्यषिञ्चंस्ताः प्रजा राज्याय शन्तनुम् ॥१॥
ततोऽभिषिक्ते कौरव्ये वनन्देवापिराविशत् ।
न ववर्षाथ पर्जन्यस्तस्मिन्राष्ट्रे शतं समाः ॥२॥
ततोऽभ्यगच्छद्देवापिं प्रजाभिः सह शन्तनुः ।
प्रसादयामास चैनं तस्मिन् धर्मव्यतिक्रमे ॥३॥
शिशिच[१] चैनं राज्येन[२] प्रजाभिः सहितस्तदा ।
तमुवाचाथ देवापिः प्रह्वं प्राञ्जलिसंस्थितम्[३] ॥४॥
न राज्यमहमर्हामि त्वग्दोषोपहतेन्द्रियः ।
याजयिष्यामि ते राजन् वृष्टिकामेज्यया स्वयम् ॥५॥
ततस्तन्तु पुरोऽधत्त आर्त्विज्याय स शन्तनुः ।
स चास्य चक्रे कर्माणि[४] वार्षिकाणि यथाविधि ॥६॥

---

(१) सिषेचेति पाठः समीचीनः ।

(२) राज्ये त्विति पाठः साधीयान् । चैव राज्यदेवि क॰ ख॰ ग॰ ।

(३) प्रह्वस्तु प्राञ्जलिः स्थितः इति क॰ ख॰ घ॰, प्रह्वन्तु प्राञ्जलिस्थित-मिति ग॰, प्रह्वं प्राञ्जलिस्थितमिति पुस्तकान्तरम् ।

(४) चकार सोऽस्य कर्माणीति ख॰ ।

बृहस्पते प्रती[क]त्यग्निरीजे चैवं[१] बृहस्पतिम्।
द्वितीययास्य सूक्तस्य बोधिते जातवेदसा ॥७॥
आस्ये ते द्युमति[२] वाचं दधामि क्षुद्वि देवताः[३]।
इति[४] सोऽस्मै ददौ प्रीतो वाचं देवीं[५] तया च सः ॥८॥
स्वग्निस्ततस्त्रिभिर्देवान् जगौ दृष्यर्थमेव तु।
अग्निश्च सूक्तशेषेण क[ख]मैन्द्रं सूक्तमुत्तरम् ॥९॥
इन्द्रदृष्ठे[ग]ति विश्वेषामु[घ]दित्युत्विक्स्तुतिः परम्।
भक्तिप्रकाशने तेषां[६] विनियोगोऽत्र कीर्त्यते ॥१०॥
प्रे[ङ]तीतिहासमूक्तन्तु[७] मन्यते शाकटायनः।

---

(१) प्रतीत्येतदीजे चैवेति क॰ घ॰ च॰।
(२) चास्येति द्विमतिरिति ख॰।
(३) द्वितीययास्य सूक्तस्येत्यादि दधामि क्षुद्वि देवताः इत्यन्तपाठः क॰ ग॰ घ॰ च॰ चिह्नितपुस्तकेषु नापश्यत।
(४) ततः इति क॰ ग॰ घ॰ च॰।
(५) वाचन्देवीमिति क॰ ग॰ घ॰ च॰।
(६) भक्तिप्रकाशने नैषामिति क॰ ख॰ ग॰ घ॰ च॰।
(७) इतिहासं प्रेति सूक्तमिति ख॰, सेतिहासं प्रेति सूक्तमिति पुस्तकान्तरम्।

---

(क) ऋ॰ १०, ९८, १। (ख) ऋ॰ १०, ९९, १। (ग) ऋ॰ १०, १००, १। (घ) ऋ॰ १०, १०१, १। (ङ) ऋ॰ १०, १०२, १।

यास्केन्द्रौ चन(१)मैन्द्रं वा वैश्वदेवन्तु शौनकः ॥११॥
आजावनेन(२) भार्म्याश्च(३) इन्द्रासोमौ तु मुद्गलः ।
अजयद्वृषभं(४) युक्त्वा ऐन्द्रश्च द्रुघणं रथे ॥१२॥
युध्यन् संख्ये जयं प्रेप्सुरैन्द्रो(५) प्रतिरथं जगौ(६) ।
आशु(क)रैन्द्रमथादेवी अमीषा(ख)मित्यृचि स्तुता ॥१३॥
चतुर्थी बार्हस्पत्या स्यादावल(ग) प्रसह्यामिति(७) ।
हुवे च(८) मरुतः प्रे(घ)ति शर्व्वेति परमन्तु यत् ॥१४॥
तत्रानिरुक्तसूक्तादावृगेका सूर्य्यमर्च्चति ।
घर्मपरा(९)श्चतस्रस्तु सवितारमभी(ङ)ति या ॥१५॥
सूक्तशेषस्य षडृचः सूर्य्याचन्द्रमसौ सह ।

---

(१) पद्ममिति ख०, ब्रह्ममिति ग० घ० ।
(२) आजावने त्विति ख०, आजीवनन्त्विति पुस्तकान्तरम् ।
(३) भार्म्याश्च इति ख० गार्ग्यश्चेति पुस्तकान्तरम् ।
(४) वृषभमिति क० ख० ग० ।
(५) इन्द्रः इति पाठः सम्भवः ।
(६) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(७) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।
(८) हृषस्त्विति ख०, हूये त्विति ग० ।
(९) धर्म्मपरा इति ख० ग० ।

---

(क) ऋ० १०, १०३, १ । (ख) ऋ० १०, १०३, १२ । (ग) ऋ० १०, १०३, ४ ।
(घ) ऋ० १०, १०३, १३ । (ङ) ऋ० १०, १०३, ७ ।

तुष्टावेन्द्रमधावी[क]ति अष्टकोऽस्मात् परेण[१] तु ॥१६॥
कौत्सः कदा वसोः [ख]सूक्तं दुर्मित्रो नाम नामतः।
सुमित्र इति नामास्य[२] गुणार्थमितरं पदम् ॥१७॥
भूतांशस्तु प्रजाकामः कर्म्माणि कृतवान् पुरा।
न हि लेभे प्रजाः काश्चित्काश्यपो मुनिसत्तमः ॥१८॥
उवाच भार्य्यां भूतांशं सुतानिच्छामि यावतः।
तावतो जनयिष्यामि देवता द्वन्द्वशस्तु हि ॥१९॥
तमभ्ययुस्तु सर्व्वाणि द्वन्द्वानि स्तुतिकाम्यया।
तान्यवेक्षाय तच्चक्रे[३] नासत्यौ सूक्तभागिनौ ॥२०॥
तदेतदन्ततो भावादाश्विनं सूक्तमुच्यते।
न ह्यस्मिन्देवतालिङ्गं प्रायेणाच हि दृश्यते ॥२१॥
सूक्तेन तु परेणाच स्वयमाविर[ग]भूदिति।
आत्मानमेव तुष्टाव प्राजापत्याथ[४] दक्षिणा[घ] ॥२२॥
दातॄनत्र स्तुतानेके दक्षिणानां वदन्ति तु।
दातृत्वाद्दक्षिणानाञ्च भोजास्त्वतस्त्रिभिः स्तुताः ॥२३॥

---

(१) अष्टकः परमेष्ठेति क॰ घ॰ च॰।
(२) सुमित्रश्चैव नाम स्यादिति क॰ घ॰ च॰।
(३) तच्चक्रे इति ख॰।
(४) अथेति ख॰।

---

(क) ऋ॰ १०, १०४, १। (ख) ऋ॰ १०,१०५, १। (ग) ऋ॰१०,१०७,१।
(घ) ऋ॰ १०, १०७, ५।

असुराः पणयो नाम रसापारनिवासिनः[१]।
गास्तेऽपजह्रुरिन्द्रस्य न्यगूहंश्च[२] प्रयत्नतः ॥२४॥
बृहस्पतिस्तथापश्यद्दृष्ट्वेन्द्राय शशंस च।
प्राहिणोत्तत्र दूतीन्तु[३] सरमां पाकशासनः ॥२५॥
कि[क]मित्यत्रायुजाभिस्तां पप्रच्छुः पणयोऽसुराः।
कुतः कस्यासि कल्याणि किं वा कार्य्यमिहास्ति ते ॥२६॥
अथाब्रवीत्तां सरमा दूत्यैन्द्री विचराम्यहम्।
युष्मान् व्रजास्थान्विय्यन्ती[४] ऐन्द्रीर्गाश्चैव पृच्छति ॥२७॥
विदित्वेन्द्रस्य दूतीन्तामसुराः पापचेतसः।
ऊचुर्मा सरमे गास्त्वमिहास्माकं स्वसा भव ॥२८॥
सूक्तस्य धान्यया चर्चा[५] युग्माभिस्त्वेव सर्वशः।
साब्रवीन्नाह[ख]मिच्छामि स्वसृत्वं वा धनानि वा ॥२९॥
पिबेयं[६] तु पयस्तासां गवां यास्ता निगूहथ।
असुरास्तां तथेत्युक्त्वा तदाजह्रुः पयस्ततः ॥३०॥

---

(१) सिन्धुपारनिवासिनः इति ख०।
(२) निगूहस्तेति क० घ० च०।
(३) दूत्येऽथेति ख० ग०।
(४) विधूय वः सर्वा इति क० घ० च०।
(५) सूक्तस्यान्तपद्यर्थेति क० घ० च०।
(६) पिबामीति क० घ० च०।

---

(क) ऋ० १०, १०८, १। (ख) ऋ० १०, १०८, १०।

सा स्वभावाच्च लौल्याच्च पीत्वा तत्(१) पय आसुरम्।
वरं(२) संवननं हृद्यं बलपुष्टिकरं ततः ॥२१॥
शतयोजनविस्तारामतरत्तां रसां पुनः।
यस्याः पारेऽपरे तेषां पुरमासीच्च दुर्ज्जयम् ॥२२॥
पप्रच्छेन्द्रस्य सरमां कच्चिद्गा दृष्टवत्यसि।
सा नेति प्रत्युवाचेन्द्रं प्रभावादासुरस्य हि(३) ॥२३॥
तां जघान तदा क्रुद्ध उद्गिरन्ती पयस्ततः।
जगाम सा भयोद्विग्ना पुनरेव पणीन् प्रति ॥२४॥
पदमस्तस्य पद्धत्या रथेन हरिवाहनः।
गत्वा जघान च पणीन् गाश्च ताः पुनराहरत् ॥२५॥
तेऽवदन्(क) वैश्वदेवन्तु जामदग्न्यस्तथाप्रियः(४)।

---

(१) पेति क॰ घ॰ च॰।

(२) पयः इति ग॰।

(३) त्विति क॰ ग॰ घ॰ च॰।

(४) ख॰ चिह्नितपुस्तके एतच्छ्लोकार्द्धं न विद्यते। तत्र चाधिकम् अस्ते,
ते च तं वैश्वदेवं स्यात् प्रजाजाया शुङ्गगौ।
यामदग्निवसिष्ठाभ्यो प्रियमेधामतः परं।
भजन्त युगपत् सर्व्वे वैरूपाक्तं त्रिभिः परैः।
इति पाठो वर्त्तते।

---

(क) ऋ॰ १०, १०८, १।

युगपद्वै भजन्तं तं[1] वैरूपा चाग्रयस्त्रयः ॥२६॥
इन्द्रं प्रति जगुः सूक्तैः पणीन् प्रतिजिगीषिणम्[2]।
वैश्वदेवं परं सूक्तं घर्म्म[क]त्येकेन तु सुतान् ॥२७॥
देवानिन्द्रं च मन्यन्ते च्छन्दांस्यग्निं[3] च मध्यमम्।
आग्नेयं चित्र[ख] इत्येतज्जगादर्षिरुपस्तुतः ॥२८॥
पिबे[ग]न्द्रं स्तौति ने[घ]त्यन्वं रचोघ्नाग्नेयमुत्तरम्[4]।
इति वै[ङ] तावदैन्द्रं न[च]दाद्याः षष्ठ्यां निपातिताः[5] ॥२९॥
प्राजापत्यमथाग्नेयं वैन्यमित्यनुपूर्व्वशः।
वरुणेन्द्राग्निसोमाना[6] मिमं न[छ] इति संस्तुतिः[7] ॥४०॥
चतस्रस्त्वत्र सूक्तादावग्निरात्मस्तवं जगौ।
स्तुतः सोमस्तु षष्ठ्या च नवम्या[8]श्च पदैस्त्रिभिः ॥४१॥

---

(१) व्रतं तन्वितं क० घ० च०।
(२) प्रतिमनीषिणः इति ख०।
(३) छन्दांस्यग्निमिति ख०।
(४) आग्नेयन्तु परं ततः इति क० घ० च०।
(५) षष्ठ्यास्तु संस्तुतः इति ख०।
(६) सोमाग्निवरुणानान्त्विति क० घ० च०।
(७) संस्तवः इति ख० ग०।
(८) नवम्यामिति ख०, नवम्येति ग०।

---

(क) ऋ० १०, ११४, १। (ख) ऋ० १०, ११५, १। (ग) ऋ० १०, ११६, १। (घ) ऋ० १०, ११७, १। (ङ) ऋ० १०, ११९, १। (च) ऋ० १०, १२०, १। (छ) ऋ० १०, १२४, १।

वारुण्यस्त्वितरास्तिस्र(१) इन्द्र(क)मेवोत्तमं पदम्(२) ।
अहं(ख) वाक्सूक्तमर्य्यम्णो मित्रस्य वरुणस्य च ॥४२॥
न तं(ग) राध्याः परं सूक्तं वैश्वदेवं ममे(घ)ति यत् ।
नमस्ते वैद्युतं सूक्तं त्वाशीर्वादः परन्तु तत्(३) ॥४३॥
याङ्कल्पयन्ति नोऽरयः कृत्या(४) नाशनमात्मनः(५) ।
हिरण्यस्तुतिरायुष्यं नास(ङ)द्य(६)त्परमेष्ठिनः ॥४४॥
वदन्ति भाववृत्तं तद्यो यज्ञ(च) इति चोत्तरम्(७) ।
अपे(छ)न्द्रमत्र त्वाश्विन्यौ चतुर्थी पञ्चमी स्तुते(८) ॥४५॥
मैत्रावरुणमीजान(ज) प्रथमायामृचि स्तुता(९) ।
अर्धर्चे द्यौश्च भूमि(१०)श्च आश्विना चोत्तरे ततः(११) ॥४६॥

---

(१) स्तश्चेति ग० ।
(२) उत्तमो भगाविति ग० ।
(३) यदिति ख० ।
(४) कृत्यामिति ग० ।
(५) नतिं कृत्वा दैवतमुच्यते इति ख० ।
(६) नेति यदिति क० घ० च० ।
(७) उत्तरन्तस्य चैव वदिति क० ग० घ० ।
(८) च येति ख० ।
(९) स्तुताः इति ख० ग० ।
(१०) पृथ्वेति ख० ।
(११) आश्विनौ चोत्तरे ततः इति क० ग० घ० च०, उत्तरेश्चिति ख० ।

---

(क) ऋ० १०, १२४, ६ । (ख) ऋ० १०, १२५, १ । (ग) ऋ० १०, १२६, १ । (घ) ऋ० १०, १२८, १ । (ङ) ऋ० १०, १२९, १ । (च) ऋ० १०, १३०, १ । (छ) ऋ० १०, १३१, १ । (ज) ऋ० १०, १३२, १ ।

प्रोखे[क]न्द्रं वैश्वदेव्यृक् तु नकिर्देवा मिनीमसि[ख] ।
यस्मिन् वृच [ग]इति तस्मिन् सुस्थाने स्तूयते यमः ॥ ४७॥
केश्यग्निं [घ]केशिनः सूक्त स्तुत देवाः [ङ]परन्तु यत् ।
देवानामच वाद्या स्यादायव्यस्तृच उत्तरः[1] ॥ ४८ ॥
चायन्तां [च]वैश्वदेव्यृक् तु प्रेषस्त्वब्देवतः परः[2] ।
स्यादै त[3]दिश्वभैषज्यं रपसो वा विनाशनम्[4] ॥४९॥
भूमिर्लाचा परं सूक्तं तवे[छ]न्द्रं सूक्तमुत्तरम् ।
सूर्य्यरश्मि[ज]रिति तस्मिन् सावित्रः प्रथमस्तृचः ॥५०॥
आत्मा स्तुतः परोच[5]स्तु गन्धर्व्वेणोत्तरे तृचे ।
इन्द्रो वैष[6]निपातेन अथ वा सूर्य्य उच्यते ॥५१॥
सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिता. ।
आग्नेयं त्वग्ने[झ] तवे तु अग्ने अच्छे[ञ]ति यत्पराम्[7] ॥५२॥

(१) ऋगाद्या तत्र देवाना वाते देवस्तृच पर इति ख० ।
(२) स्तुत ख० ।
(३) स्यादेतदिवि ग० ।
(४) रपसस्यापनोदनमिति ख० ।
(५) परोऽद्यमिति ख० ।
(६) चैवेति ख० ।
(७) एष श्लोक क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते ।

(क) ऋ० १०, १३३, १ । (ख) ऋ० १०,१३४,७ । (ग) ऋ० १०,१३५,१ ।
(घ) ऋ० १०,१३६,१ । (ङ) ऋ० १०, १३७,१ । (च) ऋ० १०,१३७,५ ।
(छ) ऋ० १०, १३८, १ । (ज) ऋ० १०, १३९,१ । (झ) ऋ० १०,१४०, १ ।
(ञ) ऋ० १०, १४१, १ ।

आग्नेयं वैश्वदेवञ्च अय(क)मित्यच तु द्वृचाः(१)।
शार्ङ्गांस्तान् स्तुवन्तो अग्निमार्चन् पृथक् पृथक् ॥५२॥
आश्विनं त्यच्चि(ख)दित्येतद्य(ग)मैन्द्रं ततः परम्।
इमां खनामी(घ)ति सूक्तमिन्द्राणी यत्स्वयं जगौ॥५४॥
तदौपनिषदं सूक्तं भावदृत्तं प्रचक्षते।
(२)अरण्यानी(ङ)त्यरण्यान्याः स्तुतिरैन्द्रे तदुत्तरे॥५५॥
सावित्रं सविता यन्त्रैः(च) ससिद्धस्थित् समिध्यसे(छ)।
आग्नेयं श्रद्धया(ज) श्राद्धं मेधासूक्तमतः परम् ॥५६॥
आग्नेयमासुरित्यस्माच्छास(झ) ऐन्द्रे ततः परे।
सोम एकेभ्य(ञ) इत्येतद्भावदृत्तं प्रचक्षते(३) ॥५७॥

---

(१) द्वृचाः इति ग०।
(२) ख० चिह्नितपुस्तके अरण्यानीति श्लोकात् प्राक्, उत्तरानपर्ण्यां पाठान्तु स्तौति सूक्ते मन्त्रैरौषधिम्। पतिसंवननीं त्वं पान्माः सपत्नापनोदिकाम्। इत्यधिकं पठितम्।
(३) वदन्ति तिति ख०।

---

(क) ऋ० १०, १४२, १। (ख) ऋ० १०, १४३,१। (ग) ऋ० १०,१४४,१।
(घ) ऋ० १०, १४५, १। (ङ) ऋ० १०,१४६ १। (च) ऋ० १०,१४९,१।
(छ) ऋ० १०, १५०, १। (ज) ऋ० १०,१५१,१। (झ) ऋ० १०,१५२,१।
(ञ) ऋ० १०, १५४, १।

शौनको वैश्वदेवन्तु मन्यते शाकटायनः।
सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिताः[1] ॥५८॥
यदद्य[क]त्यवरुणोत्तमं तत्र चत्तो[ख] इति दृचे।
प्राधान्याद्वा निपाताद्वा स्तूयते ब्रह्मणस्पतिः ॥५९॥
इन्द्रस्यैव च[ग]दित्यस्यां विश्वेदेवाः परो[घ] त्यृचि।
आग्नेयं चाग्नि[२][ङ]मित्येतद्वैश्वदेवमिमा नु कम्[च] ॥६०॥
इन्द्रः प्राधान्यतस्तत्र[३] विश्वैर्देवैः सह स्तुतः।
आदित्यैश्च मरुद्भिश्च तथारूपं हि दृश्यते ॥६१॥
सूर्य्या न[छ] इति सौर्य्यन्तु यत्त्वेतदुदसा[ज]विति।
पौलोमी स्वान् गुणांस्तत्र सपत्नीनां प्रशंसति ॥६२॥
ऐन्द्रं[४] तीव्रस्य[झ] मुञ्चामि[ञ] भैषज्यं यक्ष्मनाशनम्।
राजयक्ष्महनं सूक्तं प्राजापत्यं तदुच्यते ॥६३॥
ऐन्द्राग्नं मन्यते यास्क एके लिङ्गोक्तदैवतम्।

---

(१) शौनको वैश्वदेवन्त्वित्यादि एता एव प्रकीर्त्तिता इत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु नेक्ष्यते।
(२) त्वमिमिति ख०।
(३) प्रधानतो वाचेति ख०।
(४) इन्द्रमिति ख०।

---

(क) ऋ० १०, १५५, १। (ख) ऋ० १०,१५५,२। (ग) ऋ० १०,१५५,४। (घ) ऋ० १०, १५५, ५। (ङ) ऋ० १०,१५६,१। (च) ऋ० १०,१५७,१। (छ) ऋ० १, १५८, १। (ज) ऋ० १०,१५९, १। (झ) ऋ० १०, १६०, १। (ञ) ऋ० १०, १६१, १।

गर्भसंस्रवसंयुक्तं[१] यत्वेतद्ब्रह्मणे[क]ति तु ॥६४॥
स्रवतामपि गर्भाणां दृष्टन्तदनुमन्त्रणम्।
वैन्यन्तु वेनस्तत्पश्य[२] द्वीभ्यां[ख] यक्ष्मनाशनम् ॥६५॥
दुःस्वप्नघ्नमपेहीं[ग]ति निपातीन्द्रोऽग्निरेव तु।
आसीदृषि[३]र्दीर्घतपाः[४] कपोतो नाम नैर्ऋतः ॥६६॥
चक्रे[५]कपोतस्तस्याथामग्निधाने पदङ्किल।
स त[६]मात्मद्वितैर्वाक्यैः कपोतं स्तुतवानृषिः[७] ॥६७॥
देवा[घ]इति तु सूक्तेन प्रायश्चित्तार्थमुच्यते।
ऋषभं मा[ङ] सपत्नघ्नं येनेदमिति मानवम् ॥६८॥
तुभ्ये[च]त्यृषी ददृशतुरैन्द्रं गाथिनभार्गवौ।
वरुणो विधातानुमतिर्धाता सोमो बृहस्पतिः ॥६९॥
षड़ेता देवतास्त्वच तृतीयायामृचि स्तुताः।
वातस्ये[छ]ति परेणास्तौदनिलं पितरं स्वकम् ॥७०॥

---

(१) रक्षोघ्नाग्नेयमित्युक्तमिति ख० ग०।
(२) अपपश्यदित्यर्थे पश्यदित्यार्षः। भावदृत्तं पदच्चैवमिति ग०।
(३) आश्रीविषः इति ख०।
(४) दीप्ततपाः इति क० घ० च०।
(५) चकरोदिति क० घ० च०।
(६) स्रुतमिति ख०, स्तुतमिति ग०।
(७) कपोतो नैर्ऋतस्तदेति क० ग० घ० च०।

---

(क) ऋ० १०, १६२, १। (ख) ऋ० १०,१६३,१। (ग) ऋ० १०,१६४,१।
(घ) ऋ० १०, १६५, १। (ङ) ऋ० १०,१६६, १। (च) ऋ० १०,१६७,१।
(छ) ऋ० १०, १६८, १।

मयो भू(क)रिति यत्सूक्तमपश्यच्छ्वर(१) ऋषिः ।
नानारूपाः पयस्विन्यो गावस्तत्र तु संस्तुताः ॥७१॥
विभ्राट्(ख) सौर्य्यन्त्वन्य(ग)मैन्द्रन्त्वायाही(घ)त्युषसः स्तुतिः ।
आ ला(ङ)राज्ञेऽभिषिक्ताय(२)द्वे सूक्ते चानुमन्त्रणे ॥७२॥
प्रव (च)इत्युत्तरं यावणं ददर्श स्तुतिमार्ब्बुदिः(३) ।
यत्नतः(४) परमाग्नेयं तत्रार्भ्यूक् प्रसूनवः(छ) ॥७३॥
ऋषिर्जगौ पतङ्गस्तु पतङ्ग(ज)मिति यत्परम् ।
तत्सौर्य्यमेके मन्यन्ते मायाभेदं तथापरे ॥७४॥
मायाभेदे द्वितीयायां वाक् स्तुतेत्याह शौनकः ।
देवी विभ्रमति मनसापा वाचा विदितां सती(५) ॥७५॥
त्यमूस्वि(झ)ति तु सौपर्ण(६) सूक्तं स्वस्त्ययनं विदुः ।
उ(ञ)देन्द्रं वैश्वदेवन्तु प्रयस्वे(ट)ति च यत्परम् ॥७६॥

(१) शभरः इति क० घ० च० ।
(२) ध्यभिषिक्तस्येति ख० ।
(३) श्चार्बुदः इति ख० ।
(४) यवत इति क० घ० च० ।
(५) मायाभदे द्वितीयायामित्यादि पा वाचा विदितां सतीत्यन्तपाठः क० ग० घ० च० चिह्नितपुस्तकेषु न दृश्यते ।
(६) तार्क्ष्यैवत्यमिति ख० ।

(क) ऋ० १०, १६९, १। (ख) ऋ० १०,१७०,१ । (ग) ऋ० १०, १७१,१ ।
(घ) ऋ० १०, १७२, १ । (ङ) ऋ० १०,१७३, १ । (च) ऋ० १०,१७५,१ ।
(छ) ऋ० १०, १७६, १ । (ज) ऋ० १०,१७७,१ । (झ) ऋ० १०,१७८,१ ।
(ञ) ऋ० १०, १७९, १ । (ट) । ऋ० १०, १८१, १ ।

आत्मप्रभावमाचख्युस्तचाद्या ऋचयस्त्रयः ।
रथन्तरं यथा स्तोत्रं स्तोत्रञ्चैव यथा बृहत् ॥७७॥
यथा च सम्भृतो घर्मः सवितुश्चोपलक्ष्यते(१) ।
बृहस्पति(क)रिति तस्मिन् स्तुतः सूक्ते बृहस्पतिः ॥७८॥
आशिषो यजमानस्य केचिदेतां स्तुतिं विदुः(२) ।
प्राजापत्यस्य यत् सूक्तमपश्यं त्वा(ख)प्रजावतः ॥७९॥
प्रत्यृचं देवता स्तौति लिङ्गैरेवाच देवताः(३) ।
आशिषः पुत्रकामस्य प्रथमा हि वदत्यथ ॥८०॥
द्वितीया पुत्रकामायास्तृतीयात्मस्तव(४)स्तृपेः ।
यद्विष्णु(ग)रिति सूक्तन्तु वैश्वदेवं प्रचक्षते ॥८१॥
तस्मिन् स्वदारगर्भार्थमृषिराशास्त आशिषः ।

---

(१) वादश्चैवाच दृश्यते इति क० घ० च० ।

(२) बृहस्पतिरिति तस्मिन्नित्यादि केचिदेतां स्तुतिं विदुरित्यन्तपाठः ख० चिह्नितपुस्तके न विद्यते । तत्र अस्मिन् स्थले, सूक्तेऽस्मिन् देवतास्तिस्र एता एव प्रकीर्त्तिताः इति श्लोकार्द्धं वर्त्तते ।

(३) एवार्धश्चविताः इति ख०, एष श्लोकः क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते ।

(४) आत्मस्तवमिति ग० ।

---

(क) ऋ० १०,१८२, १। (ख) ऋ० १०,१८३, १। (ग) ऋ०१०,१८४, १।

परन्तु[१] नेजमेषं हि[२] गर्भार्थे ताव[३]दुच्यते ॥८२॥
माहित्वं यन्महि त्रीणा[क]मादित्यानां स्तुतिं विदुः[४]।
सूर्यवरुणमित्राणामादित्येष्वितरेषु तु[५] ॥८३॥
एत[६] एव त्रयो वाता स्तुताः स्वस्त्ये[७]तोऽन्यथा।
शान्त्यर्थं सूक्तमेतद्धि पावनं चैव विश्रुतम् ॥८४॥
पातमपि स्वस्त्ययने दृष्टं तदनुमन्त्रणम्[८]।
उक्तोऽस्तौत्पितरं वातमाग्नेयं शग्नये[ख] परम् ॥८५॥
विसष्टं जातवेदस्यं प्रे[ग]ति दाशतयीषु[९] तु।
यत्किञ्चिदेव ला[१०]ग्नेयं जातवेदस्यमुच्यते॥८६॥
आयङ्गौ[घ]रिति यत्सूक्तं सार्पराज्ञी[११]स्वयं जगौ।

(१) परे त्विति ख०।
(२) नेजमेषेतीति ख० ग०।
(३) वा तदि क० घ० च०।
(४) आदित्येष्वितरेषु त्विति क० घ० च०।
(५) एतच्छ्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(६) एक इति क० घ० च०।
(७) स्वस्त्येष्विति ख०।
(८) एतच्छ्लोकार्द्धं क० ग० घ० च० चिह्नितपुस्तकेषु न विद्यते।
(९) दाशतयीष्विति ख०।
(१०) यन्यत्रेति ख० ग०।
(११) सर्पराज्ञीति क० घ० च०।

(क) ऋ० १०, १८५, १। (ख) ऋ० १०, १८७, १। (ग) ऋ० १०, १८८, १।
(घ) ऋ० १०, १८९, १।

तस्मात् सा देवता[१] तत्र सूर्य्यमेके प्रचक्षते ॥८७॥
मुद्गलः शाकपूणिश्च आचार्य्यश्च रथीतरः[२]।
त्रिस्थानाधिष्ठितां वाचं मन्यन्ते प्रत्यृचं स्तुताम् ॥८८॥
भाववृत्तपरं[३] सूक्तं ददर्शाथाघमर्षणः।
परं न विद्यते तस्माच्छान्त्यै वा पावनाय वा ॥८९॥
यथाश्वमेधः क्रतुराट् सर्व्वरिप्रप्रणोदनः[४]।
तथाघमर्षणं ब्रह्म सर्व्वरिप्रप्रणोदनं[५] ॥९०॥
तदादीनि[६] तु यज्ञातः संज्ञानं ज्ञानसंस्तवः।
चतुर्थं यत्तु नैर्हस्त्यं तत्सपत्ननिवर्हणम्[७] ॥९१॥
संसमित्[क] आग्नेय्याश्चेत्याग्नेये एव ते स्तुते[८]।

---

(१) तस्य स्याद्देवतेति क॰ ख॰ घ॰ च॰।
(२) आचार्य्य शाकटायन इति ख॰ ग॰।
(३) भाववृत्तम्त्वमिति क॰ घ॰ च॰।
(४) सर्व्वरीप्रप्रणोदन इति ख॰।
(५) यथाश्वमेधः क्रतुराट् इत्यादि सर्व्वरिप्रप्रणोदनमित्यन्तपाठः क॰ घ॰ च॰ चिह्नितपुस्तकेषु नापश्यत।
(६) त्यदादीनीति क॰ घ॰ च॰।
(७) चतुर्थस्त्वैर्हस्त्य यत्तत्सपत्नीनिवर्हणमिति क॰ घ॰ च॰।
(८) उभे तथाग्निदेवते इति क॰ घ॰ च॰।

---

(क) ऋ॰ १०, १९१, १।

उशना वरुणश्चेन्द्रश्चाग्निश्च सविता सुताः ॥८२॥
संज्ञानं प्रथमस्या[१]न्तु द्वितीयस्यामथाश्विनौ[२]।
तृतीया.चोत्तमे च द्वे आशिषोऽभिवदन्ति ताः[३] ॥८३॥
इन्द्रः पूषा सपत्नघ्ने द्वितीयस्यामृचि स्तुतौ।
देवानामितराः प्रोक्ता आशीर्वादपराश्च याः[४] ॥८४॥
[५]महानाम्न्य ऋचो गुह्यास्ता ऐन्द्र्यश्चैव यो वदेत्।
सहस्रयुगपर्यन्तं सोऽहं ब्रह्म स राध्यते[६] ॥८५॥
[७]पुरीषपदमाधान्तु प्रथमं स्यात्प्रजापतेः[८]।

---

(१) प्रथमायामिति पाठ शुद्धः।
(२) उशना वरुणश्चेन्द्रइत्यादि द्वितीयस्यामथाश्विनावित्यन्तपाठः क० घ० च० चिह्नितपुस्तकेषु न दृश्यते।
(३) स त्वाशीर्व्वाद उच्यते इति क० घ० च०।
(४) एष श्लोकः क० घ० च० चिह्नितपुस्तकेषु नेष्यते।
(५) ख० चिह्नितपुस्तके महानाम्ना इति श्लोकात्प्राक्, संसंज्ञानमित्येते प्रैवनन्तं विदुरिति श्लोकार्द्धं वर्त्तते।
(६) राध्यतीति पाठः साधु, सोऽहं ब्राह्मः सराध्यते इति क० घ० च०, साह ब्राह्मं स्वरं ध्यास्ते इति ख०।
(७) त्वमिदेवतमिति ख०।
(८) ख० चिह्नितपुस्तके पुरीषपदमासान्त्विति श्लोकात् प्राक्,—

विधाधर्म्मयाधिकाः सूक्तानाष्ट-
स्तस्मिन् स्तुतो दृश्यते यः सूक्तभावा।
प्रधानसूक्तं किल देवतायाः
सूक्तभाजः सर्व्वदा शौनकेन॥

आग्नेयमैन्द्रं वैष्णवं पौष्णं दैवन्तु पञ्चमम्[1] ॥९६॥
अग्नेः प्रयाजानुयाजाः प्रैषा ये च[2] हवींषि च।
यद्दैवत हविस्तु स्यात्प्रैषास्तद्देवतास्तु[3] ते ।९७॥
निविदां निगदानाञ्च स्वै स्वैर्लिङ्गैश्च देवता[4]।
निगदेन[5] निगद्यन्ते याश्च कल्पानुगा ऋचः ॥९८॥
अग्नेरेव तु गायत्र्य उष्णिहः[6] सवितुः स्मृताः।
अनुष्टुभस्तु सोमस्य बृहत्यस्तु बृहस्पतेः ॥९९॥

---

ऐन्द्रा ऋचो महानाम्नीस्तु विद्या
तथा हि दृष्टं ब्राह्मणसूक्तशब्दं।
न दृश्यते सूक्तशब्दो न वित्तु
यथा प्रैषेष्वाहासूक्ताभिधानम्।

सूक्तैकदेशा इति तान् प्रतीया-
दन्याश्च कुर्यात् पदशो निशम्य।
यथैतस्रो देवि निपादि सद्या
कुन्तापे तत्सर्व्वमेकं सूक्तम्।

इत्यधिकपाठोऽस्ति

(१) विन्द्र त्वा वैष्णवञ्चैव पौष्णञ्चैव मन परमिति ख॰।
(२) एवेति क॰ घ॰ च॰।
(३) चेति ख॰।
(४) स्विङ्गोक्तदेवता इति क॰ घ॰ च॰।
(५) निगदेष्विति ख॰।
(६) उष्णिक इति ख॰, उष्णिहेति ग॰।

पङ्क्त्यस्त्रिष्टुभश्चैव विद्यादैन्द्र्यश्च सर्व्वशः।
विश्वेषां चैव देवानां जगत्यो याश्च काश्चन ॥१००॥
विराजश्चैव मित्रस्य स्वराजो वरुणस्य च।
विषये यस्य वा स्यातां स्यातां वा वायुदेवते ॥१०१॥
इन्द्रस्यातिष्ठतिः प्रोक्ता वायोश्च भूरिजः स्मृताः[१]।
यास्त्वतिच्छन्दसः काश्चित्ताः प्रजापतिदेवताः[२] ॥१०२॥
विच्छन्दसस्तु-वायव्या मन्त्राः पादैश्च ये मिताः।
पौरुषा द्विपदाः सर्व्वा ब्राह्म्य एकपदाः स्मृताः[३] ॥१०३॥
समस्ता ऋचश्च आग्नेय्यो वायव्यानि यजूंषि च।
सौर्य्याणि चैव सामानि सर्व्वाणि ब्राह्मणानि च ॥१०४॥
वैश्वदेवो वषट्कारो हिङ्कारो ये यजामहे।
रूपं वज्रस्य वाक्पूर्व्वं स्वाहाकारोऽग्निदेवतः ॥१०५॥
देवानाञ्च पितॄणाञ्च नमस्कारः स्वधैव[४] च।
क्रुष्टो मूर्द्धनि विज्ञेयस्तालव्यः प्रथमः स्वरः ॥१०६॥
द्वितीयस्तु भ्रुवोर्मध्ये तृतीयः कर्णसंश्रितः।
चतुर्थो नासिकाग्रे स्यादौरसो मन्द्र उच्यते ॥१०७॥

(१) एतच्छ्लोकार्द्धं क॰ ग॰ घ॰ चिह्नितपुस्तकेषु न पठितम्।
(२) एतच्छ्लोकार्द्धं ख॰ चिह्नितपुस्तके न दृश्यते।
(३) द्विपदा पौरुषं छन्दो ब्राह्मी त्वेकपदा स्मृताः इति ख॰।
(४) तथैवेति ख॰।

मन्द्रकर्षणसंयुक्तमतिस्वारं प्रशंसति(१)।
वदन्ति देवताः क्रुष्टं मनुष्यास्त्वितरैस्त्रिभिः(२) ॥१०८॥
द्वितीयं वसवः(३) सर्वे गन्धर्वाप्सरसः स्वरम्।
अण्डजाः पक्षिणः सर्पास्तुर्थमुपभुञ्जते(४) ॥१०९॥
मन्द्राः पिशाचा रक्षांसि असुराश्चोपभुञ्जते(५)।
अतिस्वार(६)स्तु शेषस्य जङ्गमस्थावरस्य च ॥११०॥
वैश्वदेवस्वरः क्रुष्टो नित्यं यो मूर्ध्नि तिष्ठति(७)।
तालव्यः प्रथमः साम्नां स्वर आदित्यदैवतः(८) ॥१११॥
स्वरो द्वितीयः साध्यानां भ्रुवोर्देशश्रितश्च यः(९)।
आश्विनस्तु(१०) तृतीयोऽत्र स्वरः कर्णसमाश्रितः ॥११२॥
चतुर्थस्त्वथ(११) वायव्यो नासिक्यः स्वर उच्यते।

---

(१) तु तं विदुरिति ख०।
(२) सर्वा मनुष्याः प्रथमं स्वरमिति ख०।
(३) पशवः इति ख० ग०।
(४) तूपभुज्यते इति क० घ० च०, चतुर्थश्चोपभुञ्जते इति ख०।
(५) एतचक्लोकार्द्धं क० घ० च० चिह्नितपुस्तकेषु नोपलभ्यते।
(६) चातिस्वार्यः इति क० घ० च०, अतिसार इति ख०।
(७) ख० चिह्नितपुस्तके, वदन्ति देवताः क्रुष्टमित्यादि नित्यं यो मूर्ध्नि तिष्ठतीत्यन्तं, द्वितीयस्तु भ्रुवोर्मध्ये इति श्लोकात् प्राक् पठितं।
(८) चैदन्त्य एव तिति क० घ० च०।
(९) देशं समाश्रितः इति ख० ग०।
(१०) चाग्नेयस्त्विति क० घ० च०।
(११) लेषु इति क० घ० च०।

पञ्चमस्तु स्वरः प्रोक्तश्चातुर्थः सूर्य्यदेवतः[१] ॥११३॥
यस्तु सामस्वरः षष्ठः[२] स सौम्यो मन्द्र उच्यते।
विकर्षेण तु मन्द्रस्य[३] युक्तोऽतिस्वार्य्य उच्यते ॥११४॥
स मैत्रावरुणो ज्ञेयो मन्द्रस्थानसमाहितः[४] ॥
सामस्वराणां सप्तानामेते देवा इहोदिताः[५] ॥११५॥
त्रयाणामितरेषां तु लोकाधिपतयस्त्रयः।
वाग्देवत्योऽथ वाग्नेयः प्रस्तावस्यैव सामसु ॥११६॥
उद्गीथापद्रवाविन्द्रौ स्यातां वा वायुदेवते।
सौर्य्यः स्यात्प्रतिहारोऽत्र निधनं वैश्वदेवतम् ॥११७॥
हिङ्कारप्रणवाभ्यान्तु पुरस्तादेव कीर्तनात्।
इति व्यस्तसमस्तानां मन्त्राणामिह दैवतम्।
देवताविद्विचेत प्रयोगे सर्व्वकर्म्मणाम् ॥११८॥

सप्तर्षयो वसवश्चापि देवा
अथर्व्वाणो भगवः सोमसूर्य्याः[६]।

---

(१) एतच्छ्लोकार्द्धं क॰ घ॰ च॰ चिह्नितपुस्तकेषु नापश्यत।
(२) कुष्ट इति क॰ घ॰ च॰।
(३) कर्षणेनैव मन्द्रस्येति क॰ घ॰ च॰, विकर्षेन तु मन्द्रस्येति ख॰।
(४) मन्द्रस्थानसमाहितः इति क॰ घ॰ च॰, मन्द्रस्थानसमानि च-द्धिति ग॰।
(५) इति स्वराणां सप्तानामुक्ताः सामसु देवताः इति क॰ घ॰ च॰।
(६) पंशोऽर्य्यमा इति क॰ घ॰ च॰।

पथ्यास्वस्ती रोदसी चोक्तमन्त्रे
कुहूर्गुङ्गुरदितिर्धेनुरघ्न्या ॥११९॥
असुनीतिरिला वा धीः(१) विधातानुमतिर्दया।
वैश्वानरो ह्नि(२) संहिताः स्युरुक्तमन्त्राश्च देवताः ॥१२०॥
प्रजापतिर्गौः सुधन्वा नगोध(२) —र्णो विवस्वान्
अपां नपादर्य्यमा वातजूति-
रिलस्पतिश्चैव रयस्पतिश्च ॥१२१॥
ऋभवः पर्जन्यः पर्वताग्राश्च(४) पत्नी-
र्दचो भगो(५) देवपत्नीर्दिशश्च।
आदित्या रुद्राः पितरोऽथ साध्या
निपातिनो वैश्वदेवेषु सर्वे ॥१२२॥
अनुक्रान्ता देवताः सूक्तभाजो
हविर्भाजश्चोभयथा निपातैः।
अथैवं स्यादुभयथान्यथा वा
न प्रत्यक्षमनृषेरस्ति मन्त्रः ॥१२२॥

---

(१) स्यादिति ख॰ ग॰।
(२) द्योः सुधन्वा गोभ्य इति क॰ घ॰ च॰, न नद्य॰ इति ग॰।
(३) अपोति ख॰ ग॰।
(४) वा गावश्चेति क॰ घ॰ च॰।
(५) भर्गो इति ग॰।

योगेन दाक्ष्येण दमेन बुद्ध्या
बाहुश्रुत्येन तपसा नियोगैः[1]।
उपास्यास्याः[2] कृत्स्नशो देवता या[3]
ऋचो ह यो वेद स वेद देवान्।
यजूंषि यो वेद स वेद यज्ञान्
सामानि यो वेद स वेद तत्त्वं ॥१२४॥

अष्टौ मे पुत्रकामाया अब्दादूर्द्ध्वं च त[4]त्स्मृतम्।
आग्नियो योगमेतं हि वाक्ष्यौ गोर्येन[5] मन्यते ॥१२५॥

एकारमनुकम्पार्थं नाम्नि स्मरति माठरः।
आख्यातभूतकरणं[6] वाष्कला स्त्री व्ययो स्त ॥१२६॥

मन्त्राणां देवताविद्यः प्रयुङ्क्ते कर्म कर्हिचित्।
जुषन्ते देवतास्तस्य[7] हवि[8]र्वा[9]देवताविदः ॥१२७॥

अविज्ञानप्रदिष्टं[10] हि हविर्नाश्नन्ति देवताः।

---

(१) अभियोगैरिति ख०।
(२) उपास्यास्ता इति ख० ग०।
(३) दैवतस्येति क० घ० च०।
(४) स वागर्थेन यदिति क० घ० च०।
(५) यक्षौ गौर्येन्विति ख०।
(६) आख्याते भूतकरणमिति ख०।
(७) यस्येति ग०।
(८) हविर्ह्वेति ख०।
(९) नेति क० ग० घ० च०।
(१०) अविज्ञातप्रदिष्टमिति क० घ० च०।

तस्मान्मनसि संन्यस्य देवता जुहुयाद्धविः ॥१२८॥
स्वाध्यायमेव[1] योऽधीते मन्त्रदैवतविच्छुचि ।
स सद्मवदिव [2]स्वर्गे सद्मवद्भिरपीज्यते[3] ॥१२९॥
नियमोऽथ जपे होमे ऋषिच्छन्दोऽथ दैवतम् ।
अन्यथा चेत् प्रयुञ्जानस्तत्फलाच्चाव हीयते ॥१३०॥
ऋषिच्छन्दोदैवतादिज्ञान यज्ञादिषु स्मृतम् ।
तदाश्रित्य प्राणदृष्टिर्विहितावेति गम्यताम् ॥१३१॥
अविदित्वा ऋषिच्छन्दोदैवतं योगमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः ॥१३२॥
अर्थेप्सव ऋषयश्छन्दोभिर्देवताः पुरा ।
अभ्यधावन्निति च्छन्दो मध्ये त्वाऽङमेहर्पय. ॥१३३॥
ऋषिन्तु प्रथम ब्रूयाच्छन्दस्तु तदनन्तरम् ।
देवतामथ मन्त्राणां कर्मस्वेवमिति श्रुतिः ॥१३४॥
आप्तय वा अनाप्तश्च[4] विविच्यात्मानमात्मनि ।
ईक्षमाणो ह्युभौ सन्निमृचो दैवतवित्पठेत् ॥१३५॥
स ब्रह्मामृतमत्यन्त योनि सदसतोर्ध्रुवम् ।
महद्वाणु च विश्वेश विशति ज्योतिरुत्तमम् ॥१३६॥

इति शौनकाचार्यकृतायां बृहद्देवतायामष्टमोऽध्यायः ॥

समाप्ता बृहद्देवता ॥

---

(१) उतेति क० ख० च० ।
(२) स्वसद्मसदपीति ग० ।
(३) सपीध्यते इति क० ख० च० ।
(४) आत्मान वाप्यनधारमिति ख०, आत्मान साप्यनाधारमिति ग०

श्रीः

# अथार्षानुक्रमणी ।

## प्रथमं मण्डलम् ।

ऋग्वेदमखिलं ये हि द्रष्टारो मुनिपुङ्गवाः ।
तदनुक्रमणायाहं नमामि परमेश्वरीम् ॥१॥
अग्निमीळे इत्यादि प्रथमं मण्डलं प्रति ।
शतर्चिनस्तु विज्ञेया ऋषयः सुखसिद्धये ॥२॥
तेषां पूर्वो मधुच्छन्दा मेधातिथिरनन्तरः ।
शुनःशेपस्तृतीयोऽयं हिरण्यस्तूप उत्तरः ॥३॥
कण्वस्तु पञ्चमः षष्ठः प्रस्कण्वः सव्य उत्तरः ।
नोधाः पराशरश्चान्यो गोतमः कुत्स उत्तरः ॥४॥
काश्यपस्त्वथ कक्षीवान् परुच्छेपस्तदुत्तरः ।
दीर्घतमास्ततोऽगस्त्यः षोडशैते शतर्चिनः ॥५॥
ऋचां शतानि दृष्ट्वा(क)ऽत एव शतर्चिनः ।
जेतादीनान्तु नह्यास्ति तस्मान्नैते शतर्चिनः ॥६॥

---

(क) शतानां दृष्टत्वादिति पाठो भवितुमर्हति ।

तत्र त्वादित आरभ्य सूक्तानां दशकं प्रति ।
वैश्वामित्रो[क] मधुच्छन्दा ऋषिरित्यवगम्यताम् ॥७॥
इन्द्रं विश्वा(११)[ख] इति तस्य जेता तस्य सुतो मुनिः ।
अग्निं दूत(१२)मुपक्रम्य सूक्तादाद्यकं प्रति ॥८॥
काण्वो मेधातिथिर्नाम मुनिरित्यवगम्यताम् ।
कद्य नून(२४)मुपक्रम्य सूक्तानां सप्तकं प्रति ॥९॥
आजीगर्त्तिः शुनःशेप ऋषिरित्यवगम्यताम् ।
अयन्तु देवराताख्यो वैश्वामित्रस्य कृत्रिमः ॥१०॥
त्वमग्न(३१) इत्युपक्रम्य सूक्तानां पञ्चकं प्रति ।
हिरण्यस्तूपनामायमृषिराङ्गिरसः सुतः ॥११॥
प्र वो यज्ञ(३६)मुपक्रम्य सूक्तानामष्टकं प्रति ।
घोरस्य पुत्त्रः कण्वोऽयमृषिरित्यवगम्यताम् ॥१२॥
[ग]अभित्यं मेष(५१)मित्यादिसूक्तानां सप्तकं प्रति ।
सव्यो हि नामाङ्गिरस ऋषिरित्यवगम्यताम् ॥१३॥
नू चित्सहोजा(५८) इत्यादि सूक्तानां सप्तकं प्रति ।
गोतमस्य सुतो नोधा ऋषिरित्यवगम्यताम् ॥१४॥

---

(क) विश्वामित्र इति घ० ।

(ख) (११) चिह्नेनानेन सूक्तसङ्ख्या परिज्ञेया । एवं परत्रापि । मण्डलसङ्ख्या तु मूलत एवावगम्यताम् ।

(ग) अग्ने विवस्वदि(४४)त्यादि सूक्तानां सप्तकं प्रति ।
कण्वस्य पुत्त्रः प्रस्कण्व ऋषिरित्यवगम्यताम् ॥
इत्येवं श्लोकोऽस्मात् पूर्व्वं भवितुमर्हति । सर्व्वानुक्रमण्यादौ तथैवोपलम्भात् ।

पश्वा न तायु(६५)मित्यादिसूक्तानां नवकं प्रति ।
शाक्त्यः पराशरो नाम ऋषिरित्यवगम्यताम् ॥१५॥
उपप्रयन्त(७४) इत्यादिसूक्तानां विंशतिं प्रति ।
राहूगणो गोतमो(क)ऽयमृषिरित्यवगम्यताम् ॥१६॥
इमं स्तोम(९४)मुपक्रम्य सूक्तानां पञ्चकं प्रति ।
कुत्सो हि नामाङ्गिरस ऋषिरित्यवगम्यताम् ॥१७॥
जातवेदस(९९) इत्यस्मिन् मारीचः काश्यपो मुनिः ।
स यो वृषे(१००)ति सूक्तस्य ह्यृषयो वार्षागिराः ॥१८॥
ऋज्राश्वः प्रथमस्तेषां भयमानसुराधसौ ।
सहदेवोऽम्बरीषश्च तेऽत्र सूक्ते प्रकीर्त्तिताः ॥१९॥
चन्द्रमा(१०५) इति सूक्तस्य त्रित आप्त्योऽथवा ऋषिः ।
नासत्याभ्या(११६)मुपक्रम्य सूक्तेष्वेकादशस्वथ ॥२०॥
कक्षीवान् दैर्घतमस उशिक्सूनुः स एव च ।
भावयव्यस्तु राजायमृषिरा गधिते(१२६,६)त्यृचः ॥२१॥
तद्भार्या रोमशा नामोपोत्तमस्या उपोत्तमे ।
अग्निं होतार(१२७)मित्यादिसूक्तेष्वेव त्रयोदश ॥२२॥
दैवोदासिः परुच्छेपो राजैवायमृषिस्ततः ।
वेदिषदे(१४०)प्रभृतीनां सूक्तानां पञ्चविंशतेः ॥२३॥
दीर्घतमा नामौचथ्य ऋषिरित्यवगम्यताम् ।
कया शुभेतिसंवाद इन्द्रादीनां हि तत्र तु ॥२४॥

(क) गौतम इति घ० ।

# अथ तृतीयं मण्डलम्।



सोमस्य मे(१)त्युपक्रम्य तृतीयं मण्डलं प्रति ।
विश्वामित्र इति ज्ञेयः स च गाथिसुतः[क] स्मृतः ॥१॥
ऋषभो द्वे प्र वः(१३) सूक्ते विश्वामित्रसुतो जगौ ।
विपाजसे(१५)ति सूक्ते द्वे कात्योत्कील ऋषिर्जगौ ॥२॥
समिध्यमानो(१७) द्वे सूक्ते वैश्वामित्रः कतो जगौ ।
अग्निं होतार(१९)मारभ्य गाथी नाम स कौशिकः ॥३॥
सूक्तान्यपश्यच्चत्वारि सूक्ते निर्मथिते परे।
देवश्रवोदेववातावृषी एतौ हि भारतौ ॥४॥
कुशिकः शासद्(३१)त्यस्मिन्निषीरथसुतो मुनिः ।
अथवा मण्डलद्रष्टा विश्वामित्रो यथा श्रुतिः[ख] ॥५॥
प्र पर्वताना(३३)मित्यस्मिन् विपाड्रित्येवमादिभिः ।
नदीभिः सह संवादो विश्वामित्रस्योक्तितीर्थाः ॥६॥
अष्टमी दशमी षष्ठी चतुर्थी च नदीवचः ।
शिष्टा या नवसूक्तस्य विश्वामित्रवचांसि ताः ॥७॥
अस्मे प्रयन्धी(३६,१०)त्येतस्यां घोर आङ्गिरसो मुनिः ।

---

(क) गाथीसुतः इति क॰ ।

(ख) मुनिरिति ज॰ ।

(३६,१०) चिह्नेनानेन सूक्तसङ्ख्या ऋक्सङ्ख्या च अवगन्तव्या। एवं परत्रापि।

निर्द्दिश्यमानेऽपि श्रूयते(क) सा न प्रस्तते ॥८॥
अभि तष्टेव(१८) सूक्तस्य वैश्वामित्रः प्रजापतिः ।
वाच्यो वा स उभौ वा तौ विश्वामित्रोऽथवा श्रुतेः ॥९॥
इमं महे(५४) उपक्रम्य सूक्तानां त्रितयं प्रति ।
अयमेव ऋषिर्विद्यादुक्तगोत्रः प्रजापतिः ।
भार्गवो जमदग्निर्वा मण्डलान्त्ये तृचेऽप्यृषिः ॥१०॥

इति तृतीयं मण्डलम् ।

---

(क) प्रस्यमानेति भूयते इति ७० ।

# अथ चतुर्थं मण्डलम्।

त्वां ह्यग्ने सद(१)मित्यादि चतुर्थं मण्डलं प्रति ।
गौतमो वामदेवो[क]ऽस्यम्रषिरित्यवगम्यताम् ॥१॥
अयं पन्थास्तु संवाद इन्द्रादेः सूक्तमत्र तु ।
अयं पन्था(१८) इति त्वस्या ऋच इन्द्रः स्वयं मुनिः ॥२॥
वामदेवस्तु पञ्चानामर्द्धर्चानां ततः परम् ।
न हि न्वस्या(१८,४)दिषण्णानामर्द्धर्चाना तथादितिः ॥३॥
ममच्चन त्वे(१८,८)त्यादीनामृचां पञ्चानां एव तु ।
वामदेव ऋषिर्विद्यादृचाप्येव विशेषतः ॥४॥
त्रसदस्युः पौरुकुत्स्य ऋषिः सूक्ते मम द्विता(४२) ।
क उ श्रव[ख](४३)दिति त्वस्य तथा तस्योत्तरस्य च ।
पुरुमीळ्होऽजमीळ्हश्च[ग] सौहोत्रौ तादृशौ मतौ ॥५॥

इति चतुर्थं मण्डलम् ।

---

(क) गोतमो वामदेवोऽर्षेति ज॰ ।
(ख) मोक्षमूलरमुद्रितऋग्वेदे क ऊं श्रवदिति पाठोऽस्ति ।
(ग) पुरुमीळ्होऽजमीळ्हश्चेति ज॰ ।

# अथ पञ्चमं मण्डलम् ।

अबोध्यग्निरुपक्रम्य पञ्चमं मण्डलं प्रति ।
पुत्राद्यैः सह भौमोऽत्रिर्मुनिरित्यवगम्यताम् ॥ १ ॥
अत्र लतुक्रगोचा ये ज्ञेयास्त्वत्रिसुता इति ।
अबोध्यग्नि(१)रिति तस्मिन्नृषी बुधगविष्ठिरौ ॥ २ ॥
कुमार(२)मिति चैतस्मिन् कुमारो वा वृशोऽथवा ।
वृशो जार(क) इति ज्ञेय उभौ वात्र समुच्चितौ ॥ ३ ॥
कमेत(२,३)मिति चैतस्यां तथा विश्वोतिषे(२,९)त्यृचि ।
वृश एव ऋषिर्विद्यात्र विकल्पसमुच्चयौ ॥ ४ ॥
त्वमग्न(१) इति सूक्तेषु चतुर्ष्वेषु वसुश्रुतः ।
सखायः सं व(७) इत्यस्मिन्निषस्त्वोत्तरेऽपि च ॥ ५ ॥
त्वामग्न(९) इति चैतस्मिन् गयस्त्वोत्तरेऽपि च ।
जनस्य गोपाः(११) सूक्तेषु चतुर्ष्वेषु सुतम्भरः ॥ ६ ॥
प्र वेधस(१५) इति तस्मिन् धरुणोऽङ्गिरसः सुतः ।
बृहद्वय(१६) इति तस्मिन् पुरु(ख)स्त्वोत्तरेऽपि च ॥ ७ ॥
प्रातरग्नि(१८)रिति तस्मिन्मृक्तवाहा द्वितो मुनिः ।
अभ्यवस्था(१९)यमग्ने (२०)च सूक्तयोरेतयोर्मुनिः ॥ ८ ॥

(क) जान इति सर्वानुक्रमण्यां दृश्यते ।

(ख) पूरुरिति सर्वानुक्रमण्यामुपलभ्यते ।

वव्रिर्नाम मुनिः पूर्वे प्रयस्वन्तस्तदुत्तरे ।
मनुष्वत्त्वे(२१)ति सूक्तस्य समो नाम मुनिः स्मृतः ॥ ९ ॥
प्र विश्वसाम(२२)न्नित्यस्य विश्वसामेत्यृषिः स्मृतः ।
अग्ने सहन्त(२३)मित्यस्य द्युम्नोऽयं विश्वचर्षणिः ॥ १० ॥
अग्ने त्वं(२४) सूक्तमेकर्चा द्वैपदा विद्यते क्रमात् ।
विप्रबन्धुः श्रुतबन्धुः सुबन्धुर्बन्धुरित्यमी ॥ ११ ॥
गौपायना इमे ज्ञेया अथवा लौपायना(क) इति ।
ऋषिरच्छा व(२५) (ख)इत्यस्मिन्नुत्तरे च वसूयवः ॥ १२ ॥
अनस्वन्ते(२७)ति सूक्तस्य त्रिवृष्णपुरुकुत्सजौ ।
त्र्यरुणत्रसदस्यू द्वावश्वमेधश्च भारतः ॥ १३ ॥
अन्त्यानां तिसृणामेषां पूर्व्वासामितरौ सह ।
अथवा भौम एवात्रिस्तृषिरत्र न शस्यते(ग) ॥ १४ ॥
दानक्रियायमेकस्य दात्रनदात्रता यतः(घ) ।
समिद्धो अग्नि(२८)रित्यस्मिन् विश्ववाराविगोत्रजा ॥ १५ ॥
य्यर्यमे(२९)त्यस्य सूक्तस्य गौरिवीतिः स शक्तिजः ।
कस्य वीरः क(३०) इत्यस्य बभ्रुर्नाम ऋषिः स्मृतः ॥ १६ ॥
इन्द्रो रथाय(३१)सूक्तेऽस्मिन्नवस्यु(ङ)र्नाम संस्मृतः ।

---

(क) लौपायना इति सर्वानुक्रमणी ।
(ख) मोक्षमूलरसम्पादित ऋग्वेदे, ऋच्छ व इति पाठोऽस्ति ।
(ग) शक्यते इति स० प० ।
(घ) दानक्रियेयमेकस्य दातृतादातृता यत इति पाठः सम्भवितुमर्हति ।
(ङ) नावस्युरिति सर्वानुक्रमणी ।

अदर्दरुत्स(२२)मित्यस्य गातुर्नाम मुनिः स्मृतः ॥१७॥
प्राजापत्यः संवरणः सूक्ते मंहि महे (२३)जगौ ।
प्रभुवसु[क]राङ्गिरसो यस्ते साधिष्ठ(२४) इत्युभे ॥१८॥
सम्भानुने(२७)त्युपक्रम्य सूक्तानां सप्तकं प्रति ।
अत्रिरेव स्वयं भौम ऋषिरित्यवगम्यताम् ॥१९॥
तं प्रत्नथे(४४)ति सूक्तेऽस्मिन्नवत्सारो हि काश्यपः ।
अन्यैश्च दशभिः साकमृषिरित्यवगम्यताम्[ख] ॥२०॥
सदापृणो यजतो[ग]श्च बाहुवृक्तः सुतम्भरः ।
श्रुतवित्तर्य्यनामा स एवावदो मनसः ॥२१॥
चत्रसभौ इमे चान्ये दृष्टलिङ्गा हि सूक्तके ।
विदा दिव(४५) इति त्वस्मिन्नृषिरेष सदापृणः ॥२२॥
हयो न विद्वा(४६)नित्यस्मिन् प्रतिक्षत्र ऋषिः स्मृतः ।
प्रयुञ्जतो(४७)ति सूक्तेऽस्मिन्नृषिः प्रतिरथः स्मृतः ॥२३॥
कदूं प्रियाय(४८)सूक्तेऽस्मिन् देवं व(४९) इति चोत्तरे ।
ऋषिः क्रमेण विज्ञेयः प्रतिभानुः प्रतिप्रभुः[घ] ॥२४॥
विश्वो देवस्य(५०) सूक्तस्य तथैवाग्ने सुतस्य(५१) च ।
उभयोरनयोरेव स्वस्त्यात्रेय इति स्मृतः ॥२५॥

---

(क) प्रभूवसुरिति सर्वानुक्रमणी ।

(ख) एष श्लोकः, ज० चिह्नितपुस्तके, सम्भानुनेत्युपक्रम्येति श्लोकात् प्राक् पठितः ।

(ग) यजतः इति पाठः सङ्गतः । सदापृणौ यजताविति च० ।

(घ) प्रतिप्रभ इति सर्वानुक्रमणी ।

प्र श्यावाश्व(५२) उपक्रम्य दशसूक्तेष्वतः परम् ।
श्यावाश्वो मरुतां स्तोता मुनिरित्यवगम्यताम् ॥२६॥
घृतेन घृत(१२)मित्यस्य सूक्तेऽयं[क] श्रुतविन्मुनिः ।
ऋतस्य गोपा(१२)वित्यस्मिन् वरुणं व (१४) इतीह च ॥२७॥
अर्चनाना ऋषिर्विद्यादृयश्चिकेते(१५)ति सूक्तयोः ।
रातहव्योऽथ यजतो वलित्येति(१०) च सूक्तयोः ॥२८॥
उरुचक्रिर्बाडृहक्रः पौरश्चैव द्वयोर्द्वयोः ।
प्रतिप्रियतमं(७५) सूक्तमवस्युर्दृष्टवान्मुनिः ॥२९॥
अत्रिरेव मुनिर्भौम आभात्यग्नि(७६)रिति द्वयोः ।
अश्विनावेह(७८) सूक्तस्य सप्तवध्रिरृषिः स्मृतः ॥३०॥
सत्यश्रवा ऋषिर्नाम महे नो अद्य(७९)सूक्तयोः ।
युञ्जते मन(८१) इत्यत्र श्यावाश्वः सूक्तयोर्ऋषिः ॥३१॥
अत्रिरच्छा वदे(८३)[ख]त्यादिचतुःसूक्तेष्वृषिः स्वयम् ।
मण्डलान्त्यस्य सूक्तस्य प्र व(८७) इत्येवयामरुत् ॥३२॥

इति पञ्चमं मण्डलम् ।

---

(क) चेति च० ।

(ख) मोक्षमूलरसम्पादित ऋग्वेदे सर्वानुक्रमण्याञ्च अच्छ वदेति पाठो वर्त्तते ।

## अथ षष्ठं मण्डलम्।

त्वं ह्यग्न इत्युपक्रम्य षष्ठाख्यं मण्डलं प्रति ।
बार्हस्पत्यो भरद्वाज ऋषिरित्यवगम्यताम् ॥ १ ॥
तत्राप्यन्ये भरद्वाजादृच्यन्ते येऽपवादतः।
तेषामनुक्तगोत्रास्तु विज्ञेयास्तत्सुता इति ॥ २ ॥
इममू षु व (१५) इत्यस्य सूक्तस्याङ्गिरसः सुतः ।
वीतहव्यो विकल्पेन मुनिरित्यवगम्यताम् ॥ ३ ॥
अभूरेक(३१)स्तपूर्व्ये(३२)ति सुहोत्रः सूक्तयोर्ऋषिः ।
शुनहोत्रो य ओजिष्ठः(३३) सद्य त्वे(३४) चेति सूक्तयोः ॥४॥
कदा(३५) सत्राम दाव(३६)स्तु सूक्तयोरनयोर्नरः ।
ऋषिर्यो रयिं व(४४)स्तादिसूक्तानां त्रितयं प्रति ॥५॥
यज्ञा यज्ञीय(४८)सूक्ते च शंयुः पुत्रो बृहस्पतेः ।
स्वादुष्किलाय(४७)मित्यस्य गर्गो नाम ऋषिः स्मृतः ॥६॥
स्तुषे जन(४९)मुपक्रम्य चतुःसूक्तेष्वयं मुनिः ।
ऋजिश्वा ये सुहोत्राद्याः पौत्राश्चैते बृहस्पतेः ॥ ७ ॥
जीमूत(७५)सूक्ते पायुस्तु भारद्वाज ऋषिः स्मृतः ।
उक्तापवादविषयादितरत्रात्र मण्डले ।
स्वयमेव भरद्वाज एवं सर्वत्र गम्यताम् ॥ ८ ॥
इति षष्ठं मण्डलम्।

## अथ सप्तमं मण्डलम्।

अग्निं नर इति त्वेतत्सप्तमं मण्डलं प्रति ।
ऋषिर्वसिष्ठो विज्ञेयो मित्रावरुणयोः सुतः ॥ १ ॥
इन्द्र क्रतुं न (३२,२६) इत्यस्मिन्नर्द्धर्चे मो षु (३२)सूक्तके ।
वसिष्ठपुत्त्रः शक्तिर्वा वसिष्ठो वा स्वयं मुनिः ॥ २ ॥
स्वित्यग्न(३३) इति सूक्तस्य नवानामादितस्त्वृचां ।
वसिष्ठ एव पञ्चानां विद्युतो ज्योति(३३,१०)रित्यृचाम् ॥ ३ ॥
वसिष्ठपुत्त्रा इन्द्रो वा ऋषिरित्यवगम्यताम् ।
तिस्रो वाच(१०१) इति त्वस्मिन् पर्ज्जन्याये(१०२)ति चोत्तरे।
अग्निपुत्त्रः कुमारो वा वसिष्ठो वा स्वयं मुनिः ॥ ४ ॥

इति सप्तमं मण्डलम्।

# अथाष्टमं मण्डलम्।

मा चिदन्यदिति(१)वेतदष्टमं मण्डलं प्रति ।
प्रगाथाद्यृषयो ज्ञेयाः शृणु वक्ष्यामि तानिह ॥ १ ॥
अनुक्तगोत्रो यस्त्वत्र मण्डले लक्ष्यते मुनिः ।
स तु काण्व इति ज्ञेयः प्राक्तत्वात्साम्मदादृषेः ॥ २ ॥
मण्डलाद्यद्वचस्यायं प्रगाथो घोरजो मुनिः ।
स हि घोरस्य कण्वस्य भ्राता सन् पुत्रताङ्गतः ॥ ३ ॥
मेधातिथिः परस्तस्मात्स मेध्यातिथिना सह ।
यच्चिद्धि त्वे(१,२)त्यृचामाद्यास्त्विरासप्तविंशतेः ॥ ४ ॥
स्तुहि स्तुही(१,२०)त्याद्यानामृचां चतसृणामृषिः ।
प्रयोग(क)पुत्र आसङ्गस्तस्य पत्नी तु शश्वती ॥ ५ ॥
अन्वस्य स्थूर(१,१४)मित्यस्याः सा च त्वङ्गिरसः सुता ।
मेधातिथिप्रियमेधावृषी सूक्ते इदं वसो(२) ॥ ६ ॥
आङ्गिरसः प्रियमेधस्तत्र मेधातिथिर्मुनिः ।
शिक्षा वि भिन्दो(ख)(२,४१) इत्यस्य द्वृचस्यान्यस्य केवलम्॥७॥
पिबा सुतस्य(३)(ग) सूक्तस्य मेधातिथिर्ऋषिः स्मृतः ।
यदिन्द्र प्रागपाक्(४) सूक्ते देवातिथिर्मुनिः स्मृतः ॥ ८ ॥

---

(क) प्लयोग इति सर्वानुक्रमणी ।

(ख) मोक्षमूलरसम्पादित ऋग्वेदे शिक्षा वि भिन्दो इति पाठोऽस्ति।

(ग) मोक्षमूलरसम्पादित ऋग्वेदे सर्वानुक्रमण्याञ्च पिब सुतस्येति पाठो वर्त्तते ।

दूरादिहेव(५) सूक्तस्य ऋषिर्ब्रह्मातिथिः स्मृतः(क) ।
महानिन्द्रो य(६)इत्यस्मिन् वत्सो नाम ऋषिः स्मृतः ॥ ९ ॥
प्र यदस्मिष्टुभं(७) सूक्ते पुनर्वत्स ऋषिः स्मृतः ।
आ नो विश्वाभि(८)रित्यस्मिन् सध्वंसो नाम संस्मृतः ॥१०॥
आ नूनमश्विने(९)त्यस्मिञ्छशकर्ण ऋषिः स्मृतः ।
यत्स्थ(१०) इत्यस्य सूक्तस्य प्रगाथो नाम संस्मृतः ॥११॥
त्वमग्ने व्रतपाः(११) सूक्ते वत्स एव मुनिः स्मृतः ।
ऋषिर्य इन्द्र(१२) सूक्तस्य पर्वतो नाम संस्मृतः ॥१२॥
इन्द्रः सुतेषु(१३) सूक्तस्य नारदो मुनिरेव सः ।
यदिन्द्राह(१४)मिति त्वस्मिंस्तमू(१५)मित्युत्तरेऽपि च ॥१३॥
गोपूक्ती चाश्वसूक्ती च ऋषी एतौ काण्वायनौ ।
प्र सम्राज(१६)मिति त्रीणि सूक्तानीरिम्बिठिर्जगौ ॥१४॥
तं गूर्द्धये(१९)ति चत्वारि ऋषिः सूक्तानि सोभरिः ।
ईळिष्व ही(२१)त्युपक्रम्य चतुःसूक्तेभ्यतः परम् ॥१५॥
ऋषिर्विश्वमना नाम स वैयश्व इतिः स्मृतः ।
एषां चतुर्थे सूक्ते तु व्यश्वो वाङ्गिरसो मुनिः ॥१६॥
अग्निस्तक्षे(२०) उपक्रम्य पञ्चसूक्तेभ्यतः परम् ।
मनुर्वैवस्वतो नाम ऋषिरित्यवगम्यताम् ।
एषां तु मध्यमे सूक्ते मारीचो वाथ कश्यपः ॥१७॥
मेधातिथिस्तु प्रकृतानि(२२) सूक्तं
मेध्यातिथिस्तत्र वयन्त(२३)सूक्तम् ।

(क) स्मृत इति ज० ।

नीपातिथिः सूक्तमथेन्द्र याहि(१४)
तृचं तथान्यं वसुरोचिषस्य ॥१८॥
सहस्रमेतेऽङ्गिरसो ह्यपस्यं-
स्ततोऽग्निनेन्द्रेण(२५) ततोऽविते(२६)ति।
चतुर्षु सूक्तेष्वत उत्तरेषु
श्यावाश्वनामा मुनिरत्रिगोत्रः ॥१९॥
अग्निमस्तोषि(२९)सूक्तेषु नाभाकोऽथ चतुर्ष्वृषिः।
एषां चतुर्थे सूक्ते वा तस्य चान्ये तृचेऽथवा ॥२०॥
आत्रेयस्त्वर्चनाना वा मुनिरित्यवगम्यताम्।
इने विप्रस्य(४२) सूक्तेऽस्मिन् समिधाग्नि(४४)मितीह च॥२१॥
विरूपोऽङ्गिरसः पुत्रस्त्रिशोकस्तत उत्तरे।
सूक्ते तावत(४६) इत्यस्मिन्नश्वपुत्र ऋषिर्वशः ॥२२॥
महि वो महतां(४७) सूक्ते ह्याप्त्यस्त्रित ऋषिः स्मृतः।
स्वादोरभक्षि(४८)सूक्तस्य प्रगाथाख्य ऋषिः स्मृतः(क) ॥२३॥

---

(क) अतः परं, एकादश सूक्तानि मोक्षमूलरसम्पादितऋग्वेदे समुप-लभ्यन्ते। तानि तु सायणेन न व्याख्यातानि। अतएव च तेषां न ऋषिनिरूपणमस्ति। किन्तु सर्वानुक्रमण्यां तत्र तत्र ऋषयो दृश्यन्ते। यथा, अभि प्र(४९) दश प्रस्कण्वः ****। प्रसुश्रुतं(५०) पुष्टिगुः। यथा मनौ (५१) श्रुष्टिगुः। यथा मनौ (५२) आयुः। उपमं त्वा(५३) मेध्यः। एतत्ते (५४) मातरिश्वा **। भूरीद् (५५) कृशः ****। प्रति ते (५६) पृषध्रः ****। युवं देवा (५७) चतुष्कं मेध्यः ****। इमानि वां (५९) तत्र सुपर्णः ****। इति। वेदार्थदीपिकायां खलु नैतावान् सन्दर्भो व्याख्यातः। स्कन्दादहृतानु-क्रमणिकाविवरणे तु सूक्तानामेषामृष्यादिनिरूपणमुपलभ्यते।

अग्न आयाहि(१०) सूक्तस्य तथा तस्योत्तरस्य च।
भर्गः प्रगाथपुत्त्रोऽयमृषिरित्यवगम्यताम् ॥२४॥
प्रगाय एव प्रो अस्मै(११) सूक्तेष्वेषु चतुर्ष्वृषिः।
तरोभि(१२)रितिसूक्तस्य प्रगाथतनयः कलिः ॥२५॥
सूक्ते लिह त्यान्वि(१०)ति सांमदो वा
मत्स्यो मुनिस्तत्सहचारिणो वा।
जालेन नद्धा[क] बहवो हि मत्स्या
मान्योऽथ मैत्रावरुणिः स्वयं वा ॥२६॥
आ त्वा रथ(१८)मिति त्वस्य प्र प्र वस्त्रिष्टुभम्(१९)[ख] च।
आङ्गिरसः प्रियमेध ऋषिरित्यवगम्यताम् ॥२७॥
यो राजे(२०)ति च सूक्तस्य त्वं न(२१) इत्युत्तरस्य च।
आङ्गिरसः पुरुहन्मा मुनिरत्र यदुत्तरम् ॥२८॥
तत्र त्वन्यतरोऽयं वा सुदीतिपुरुमीळ्हयोः।
हविष्कृणुध्व(०२)मित्यस्मिन् प्रागाथो हर्यतो मुनिः॥२९॥
उदीराथा(०२)मिति त्वस्य तथा तस्योत्तरस्य च।
आत्रेयोऽयं गोपवन ऋषिरित्यवगम्यताम् ॥३०॥
आत्रेयः सप्तवध्रिर्वा तयोः पूर्वस्य गम्यताम्।
ऋषिर्युवा हि[ग](०५) सूक्तस्य विरूपो वाङ्गिरसः सुतः॥३१॥
इमं तु(०६) सूक्तमारभ्य त्रिषु सूक्तेष्वतः परम्।

---

(क) बद्धा इति अ०।
(ख) मोक्षमूलरसम्पादितऋग्वेदे त्रिष्टुभमिति पाठो वर्त्तते।
(ग) मोक्षमूलरसम्पादितऋग्वेदे युत्व होति पाठो वर्त्तते।

काण्वः कुरुसुतिर्नाम ऋषिरित्यवगम्यताम् ॥२२॥
अयं क्रतु(७९)रिति तस्मिन् क्रतुर्नाम भृगोः सुतः ।
न ह्यन्य(८०)मिति सूक्तेऽस्मिन्नेकद्यूर्नौधसो मुनिः(क) ॥२३॥
आ तू न(ख)(८१) इत्युपक्रम्य त्रिषु सूक्तेष्वतः परम् ।
कुसीदी नाम काण्वोऽयमृषिरित्यवगम्यताम् ॥२४॥
प्रेष्ठं व(८४) इति(ग) सूक्तस्य काव्योऽयमुशना मुनिः ।
आ मे हव(८५)मुपक्रम्य त्रिषु सूक्तेष्वतः परम् ॥२५॥
आङ्गिरसः कृष्णनामा मुनिरित्यवगम्यताम् ।
एषान्तु मध्यमे सूक्ते कार्ष्णिर्वा विश्वको मुनिः ॥२६॥
उत्तरे च (घ)वसिष्ठस्य पुत्रो वा द्युम्निको(ङ) मुनिः ।
प्रियमेधो वाङ्गिरस ऋषिरित्यवगम्यताम् ॥२७॥
तम्वोदस्मस्य(च)(८८) सूक्तस्य नोधा नाम स गौतमः ।
बृहदिन्द्राय(८९) सूक्तस्य ऋषी तस्योत्तरस्य च ॥२८॥
नृमेधः पुरुमेधश्च सहैतावङ्गिरःसुतौ ।
अपाला नाम कन्ये(९१)ति सूक्तस्यात्रेः सुता मुनिः ॥२९॥
श्रुतकक्षः सुकक्षश्च तावप्याङ्गिरसः सुतौ ।

---

(क) नाम नौधसः इति घ०।
(ख) मोक्षमूलरसम्पादितऋग्वेदे आ तु न इति पाठो दृश्यते।
(ग) प्रेष्ठं वोऽतिथीति ख० च०।
(घ) उत्तरमेवेति ज०।
(ङ) द्युम्नीक इति सर्व्वानुक्रमणी।
(च) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च तम्वोदस्ममिति पाठो वर्त्तते।

पान्तमा व(९९) इति लस्य तादृषी अवगम्यताम् ॥४०॥
उद्वेदभी(९९)ति सूक्तस्य सुकक्षः स्वयमेव तु।
गौर्धयती(९४)ति सूक्तस्य बिन्दुरङ्गिरसः सुतः।
पूतदक्षोऽथवा ज्ञेयः सोऽपि चाङ्गिरसः सुतः ॥४१॥

आ त्वे(९५)ति सूक्ते तत उत्तरे च
तिरश्चिनामा[(क)]ङ्गिरसस्तनूजः।
तस्योत्तरे मारुतिर्वा द्युतानो
रेभस्ततः काश्यप उत्तरस्य ॥४२॥

इन्द्राय साम(९८) सूक्तस्य तथा तस्योत्तरस्य च।
नृमेधनामाङ्गिरस ऋषिरित्यवगम्यताम् ॥४३॥
अयन्त एमि(१००) सूक्तस्य नेमो नाम भृगोः सुतः।
अयमस्मि(१००,४) दृचे त्वस्मिन्निन्द्र एव ऋषिः स्मृतः ॥४४॥
ऋधगित्थे(१०१)ति सूक्तस्य जमदग्निः स भार्गवः।
त्वमग्न(१०२) इति सूक्तस्य प्रयोगो नाम भार्गवः ॥४५॥
अथवा दृहस्पत्यः पावकोऽग्निर्मुनिः स्मृतः।
गृहपतियविष्ठाख्यावग्नी वा सहसः सुतौ ॥४६॥
तयोरन्यतरो वाग्न्योर्ऋषिरित्यवगम्यताम्।
ऋषिस्त्वदर्शि(१०३) सूक्तस्य सोभरिर्नाम काण्वजः ॥४७॥

इत्यष्टमं मण्डलम्।

---

(क) तिरश्चो नामेति सर्व्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च।

# अथ नवमं मण्डलम् ।

स्वादिष्ठये(१)त्युपक्रम्य नवमं मण्डलं प्रति ।
पावमान्यस्तु विज्ञेया ऋषयः सौमिकाश्च ते(क) ॥ १ ॥
मण्डलाद्यस्य सूक्तस्य मधुच्छन्दा ऋषिः स्मृतः ।
पवस्व देववीः(२) सूक्ते मेधातिथिरिति स्मृतः ॥ २ ॥
एष देव(३) इति तस्य शुनःशेपो मुनिः स्मृतः ।
सना च सोम(४)(ख) सूक्तस्य हिरण्यस्तूप ऋषिः स्मृतः ॥३॥
एतेषामुक्तगोत्रत्वाद्गोत्रोक्तिर्न कृता मया ।
समिद्ध(५) इत्युपक्रम्य सूक्तानां विंशतिं प्रति ॥ ४ ॥
असितो वा देवलो वा ऋषिरेतौ तु काश्यपौ ।
ऋषिः पवस्व(२५) सूक्तेऽस्मिन्नागस्त्यः स दृल्हच्युतः ॥ ५ ॥
दृल्हच्युतस्य पुत्त्रोऽयमिध्मवाहस्तदुत्तरे ।
एष कवि(२७)रेष वाजी(२८) सूक्तयोरनयोः क्रमात् ॥६॥
नृमेधः प्रियमेधश्च मुनिराङ्गिरसाविमौ ।

(क) सर्व्वानुक्रमणीवेदार्थदीपिकाजगन्नाथकृतानुक्रमणिकाविवरणेषु नवममण्डलस्य सोमदेवताकत्वकीर्त्तनमस्ति। अत्र तु नवममण्डले सौमिकानामृषित्वं दृश्यते। अत्र शौनक एव प्रमाणम्। अथवा सोमो देवता एषामिति व्युत्पत्त्या ऋषयोऽपि सौमिका इति व्यपदिश्यन्ते। अधिकेन व्यपदेशा भवन्तीति न्यायात्।

(ख) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्याञ्च सन च सोमेति पाठो वर्त्तते।

प्राप्त(१८) प्र धारा असे(१०)ति सूक्तयोरनयोः क्रमात् ॥७॥
नृमेधश्चाथ विन्दुश्च मुनिरङ्गिरसः सुतः ।
प्र सोमासः (११) प्र सोमास:(१२) सूक्तयोरनयोः क्रमात् ॥८॥
राहूगणो गोतमोऽयं श्यावाश्वश्चात्रिगोत्रजः ।
प्र सोमास(१३) उपक्रम्य द्वयोराश्वस्थितो मुनिः ॥९॥
द्वयोर्द्वयोरुत्तरयोर्च्येपयोऽङ्गिरसः सुताः ।
प्रभुवसूरङ्गणो हृहन्मतिरिमे त्रयः ॥१०॥
प्र ये गाव(४१) उपक्रम्य त्रिषु सूक्तेष्वतः परम् ।
मेध्यातिथिः स्वयं काण्व ऋषिरित्यवगम्यताम् ॥११॥
त्रिष्वेवाङ्गिरसोऽयास्यः प्र ण(४४) इत्युत्तरेष्वृषिः ।
कविस्तु भार्गवः सूक्तेष्वया सोम(४७) इति त्रिषु ॥१२॥
उचथ्यस्त्रिषु सूक्तेपूत्त(५०) इत्यङ्गिरसः सुतः ।
उत्ते(५३) सूक्त उपक्रम्य सूक्तानामष्टकं प्रति ॥१३॥
काश्यपोऽयमवत्सार ऋषिरित्यवगम्यताम् ।
अया वीती(६१)ति सूक्ते चामहीयुरङ्गिरःसुतः ॥१४॥
एते असृग्र(६२)मित्यस्मिन् जमदग्निर्भृगोः सुतः ।
आ पवस्व(६३)ति सूक्तेऽस्मिन्निभुविः काश्यपो मुनिः ॥
वृषा सोमे(६४)ति सूक्तेऽस्मिन् मारीचः काश्यपो मुनिः॥१५॥

हिन्वन्ति(६५)सूक्तं जमदग्निरार्षः
स्वयं भृगुर्वा वरुणस्य पुत्रः ।
अग्निर्भृगोत्रास्तु पवस्व(६६)सूक्तं
वैखानसा नाम शतं विदुस्ते ॥१६॥

त्वं सोम(६०)सूक्ते सहचास्तृचेषु
मुख्येषु सप्तऋषयः प्रसिद्धाः।
भरद्वाजः कश्यपो गोतमोऽत्रि-
र्विश्वामित्रो जमदग्निर्वसिष्ठः ॥१७॥
उत्तराणां तु शिष्टानामृचामङ्गिरसः सुतः।
पवित्रो वा वसिष्ठो वा ह्युभौ वा तादृशौ स्तः ॥१८॥
प्र देव(६८)मिति वत्सप्रिः[क] सूक्तं भालन्दनो जगौ।
इषुः(६९) सूक्तं त्वाङ्गिरसो हिरण्यस्तूप उत्तरम् ॥१९॥
चिरसा(७०) इति सूक्तेऽस्मिंस्तत आ दक्षिणे(७१)त्वरे।
रेणुः पूर्वोऽथ ऋषभो वैश्वामित्रौ च तादृशौ ॥२०॥
हरिं मृजन्ति(७२) सूक्तस्य सक्के द्रप्सस्य(७३) च क्रमात्।
हरिमन्तः पवित्रश्च मुनिरङ्गिरसः सुतः ॥२१॥
शिशुर्न(७४) सूक्ते कक्षीवान्मुनिर्दीर्घतमःसुतः[ख]।
अभि प्रियाणु(७५)पक्रम्य पञ्चसूक्तेष्वतः परम् ॥२२॥
कविर्नाम भृगोः पुत्र ऋषिरित्यवगम्यताम्।
सोमस्य धारे(८०)त्यादीनां सूक्तानां त्रितयं प्रति ॥२३॥
भारद्वाजो वसुर्नाम मुनिरित्यवगम्यताम्।
पवित्र(८३)मिति सूक्तस्य पवित्रोऽङ्गिरसः सुतः ॥२४॥
ऋषिः पवस्व(८४) सूक्तस्य वाच्यो नाम प्रजापतिः।
इन्द्राय सोम(८५) सूक्तस्य वेनो नाम स भार्गवः ॥२५॥

---

(क) वत्सप्रीरिति सर्वानुक्रमणी।
(ख) दीर्घतमः सुत इति घ० च०। कक्षीवानौशिज इत्यनुक्रमणिका-विवरणम्।

प्र ते(८६) हि सूक्तं प्रथमं दशर्च-
मष्टाष्टमापा ऋषयो विदुस्ते।
निवावरी(क)स्ते सिकता द्वितीयं
तृतीयमेते खलु पृश्नयोऽजाः ॥२६॥
गणास्त्वयोऽमी कथितायतुर्थ-
मेषां तु गोत्रं क्वचिदप्रसिद्धम्।
ग्रिष्टास्तु पञ्चस्त्वृषिरत्रिरेता-
स्त्वन्त्ये तृचे गृत्समदः प्रसिद्धः ॥२७॥
प्र तु द्रवे(८७)त्युपक्रम्य सूक्तानां त्रितयं प्रति।
काव्योऽयमुशना नाम ऋषिरित्यवगम्यताम् ॥२८॥
प्र हिन्वानो(९०) वसिष्ठस्तु मित्रावरुणयोः सुतः।
असर्जि वक्रा(९१)सूक्तस्य तथा तस्योत्तरस्य च ॥२९॥
मारीचः काश्यपो नोधाः साकमुक्श्च(९२)(ख) गौतमः।
अधि य(९४)च्च कनिक्रन्ति(९५) सूक्तयोरनयोः पुनः ॥३०॥
घौरः कण्व ऋषिः पूर्व्वे काण्वः प्रस्कण्व उत्तरे।
प्र सेनानी(९६)ति सूक्तस्य दैवोदासिः प्रतर्द्दनः ॥३१॥
अस्य प्रेषे(९७)ति सूक्तस्य वसिष्ठः प्रथमे तृचे।
उत्तरेषु नवस्वेते तस्य पुत्राः पृथक् पृथक् ॥३२॥
इन्द्रप्रमतिरेकस्तु तेषां वृषगणः परः।

---

(क) निवावरीरिति प्रथमार्थे द्वितीयेत्यार्षम्।
(ख) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च साकमुक्ष इति पाठो वर्त्तते।

मन्युश्च उपमन्युश्च व्याघ्रपाच्छक्तिरुत्तरः ॥२३॥
कर्णश्रु(क)श्च मृलीकश्च वसुक्रो नवमः स्मृतः ।
चतुर्द्दशानां शिष्टानामृचां शाक्त्यः पराशरः ॥२४॥
सोमः सुत(९०,९१)स्तथान्यानां कुत्स आङ्गिरसो मुनिः ।
अम्बरीषोऽभि नः(९८) सूक्ते मान्धातृतनयस्तथा ॥२५॥
भारद्वाज ऋजिश्वा च तावेतौ सहितावृषी ।
रेभसूनू काश्यपौ च द्वयोरुत्तरयोर्ऋषी ॥२६॥
पुरोजितौ(१०१)ति सूक्तस्य सहर्चा ऋषयः स्मृताः ।
श्यावाश्वः(ख) प्रथमोऽन्धीगुर्ययातिर्नाहुषः परः ॥२७॥
नहुषो मानवस्त्वेको मनुः सांवरणः परः ।
चत्वार एते सहर्चाः शेषे वाच्यः प्रजापतिः ॥२८॥
क्राणा(१०२)त्याप्त्यस्त्रितः सूक्ते द्वित आप्त्यस्तदुत्तरे ।
पर्व्वतो नारदः काण्वौ(ग) सखायः(१०४) सूक्तयोः सह ॥२९॥
पूर्व्वे तु द्वे शिखण्डिन्यौ काश्यप्यौ वाप्सरः स्त्रियौ ।
इन्द्रमच्छे(१०६)ति सूक्तस्य सहर्चा ऋषयस्त्वय. ॥४०॥
चाक्षुषोऽग्निश्च चक्षुश्च मानवो मनुराप्सवः ।
सूक्तस्य शिष्टे पञ्चर्चे चाक्षुषोऽग्निर्ऋषिः स्मृतः ॥४१॥

---

(क) कर्णश्रुदिति सर्व्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च ।

(ख) श्यावाश्विरिति सर्व्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च ।

(ग) काण्वावित्यत्र काश्यपाविति सर्व्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च । वेदार्थदीपिकायान्तु तौ काण्वाविति व्याख्यातम् ।

परीत(१००) इति सूक्तेऽस्मिन् भारद्वाजादयो[क] विदुः।
एते तु सप्त ऋषयः सगोत्राः परिकीर्तिताः ॥४१॥
पवस्वे(१०८)त्युत्तरं सूक्तं सप्तैते ऋषयो विदुः।
तस्य त्वाद्ये तृचे शाक्त्यो गौरिवीतिर्ऋषिः स्मृतः ॥४२॥
तृतीयाया ऋचः शक्तिर्वासिष्ठोऽन्त्ये तृचेऽपि च।
अथ तृचानां शिष्टानामूरुराङ्गिरसो मुनिः ॥४४॥
भारद्वाज[ख] ऋजिश्वा च तथैवाङ्गिरसौ नृपाः।
ऊर्ध्वसद्मा कृतयशा ऋणञ्चय इति त्रयः ॥४५॥
धिष्ण्याग्नयः[ग] परि प्र(१०९)ति सूक्तमैश्वरयो विदुः।
पर्यूषु प्र(११०)ति सूक्तस्य त्रिवृष्णपुरुकुत्सजौ ॥४६॥
त्र्यरुणस्त्रसदस्युश्च मुनिरित्यवगम्यताम्।
अया रुचे(१११)ति सूक्तस्य पारुच्छेपिरनानतः ॥४७॥
नानान(११२)मिति सूक्तस्य शिशुराङ्गिरसो मुनिः।
शर्यणावति(११३)सूक्तस्य य इन्द्रो(११४)त्तरस्य च ॥४८॥
मारीचः कश्यपो नाम ऋषिरित्यवगम्यताम्।

इति नवमं मण्डलम्।

---

(क) भरद्वाजकश्यपगोतमात्रिविश्वामित्रजमदग्निवसिष्ठा इति अनुक्रमणिकाविवरणं वेदार्थदीपिका च।

(ख) भारद्वाजा इति घ०।

(ग) धिष्ण्याग्नेय इति ग० घ०।

# अथ दशमं मण्डलम्।

अग्ने बृहन्निति(१)त्येतद्दशमं मण्डलं प्रति।
क्षुद्रसूक्ता महासूक्ता विज्ञेया ऋषयस्त्विति ॥१॥
मण्डलादिमुपक्रम्य सप्तसूक्तेष्वतः परं।
आप्त्यस्त्रितो मुनिस्त्वाष्ट्रस्त्रिशिरा: सूक्तयोर्द्वयो: ॥२॥
प्रकेतुने(८)ति तत्रापि यत्सूक्तं चरमन्त्रयो:।
अम्बरीषसुतस्तत्र सिन्धुद्वीपोऽथवा मुनि: ॥३॥
ओ चि(१०)त्सूक्तेष्वयुक्ष्वृक्षु षष्ठ्या सह मुनिर्यमी।
वैवस्वतो यमो नाम नवम्या सह युक्षु तु ॥४॥
वृषा(११)द्यावा(१२)युजे(१३)त्येषां सूक्तानां त्रितयं प्रति।
आङ्गि(क)र्नाम हविर्धानो मुनिरित्यवगम्यताम् ॥५॥
एतेषामुत्तरे सूक्ते विवस्वानदितेः सुतः।
परेयिवांसं(१४)सूक्तस्य यमो वैवस्वतो मुनि: ॥६॥
उदीरतामुपक्रम्य पञ्चसूक्तान्यत: परम्।
यमपुत्रा विदुस्तेषामु(१५)च्छङ्खो दमनस्तु मा(१६) ॥७॥
एको देवश्रवास्त्वष्टा(१७)पर: सङ्कुसुक: परम्(१८)।
मथितस्तु नि वर्तध्व(१९) मस्मिन् सूक्ते मुनि: पुन: ॥८॥
भृगुर्वा वारुणिर्विद्याद्भार्गवश्च्यवनोऽथवा।
भद्र(२०)मित्यादिसूक्तानां सप्तानां विमदो मुनि: ॥९॥

(क) आङ्गिरित्यत्र आङ्गिरस इति अनुक्रमणिकाविवरणम्।

प्राजापत्यः स ऐन्द्रो वा वसुक्रद्वा वसुक्रजः।
ऋषिर्वसुक्र ऐन्द्रीयस्त्रिषु सूक्तेष्वसत्त्वि(२७)ति ॥१०॥
तन्मध्यसूक्ते विश्वो हि(२८) प्रथमाया ऋचो मुनिः।
इन्द्रस्नुषा वसुक्रस्य पत्न्येवेन्द्रो युजास्वृचाम् ॥११॥
चतुर्थ्यां सह शिष्टानां वसुक्रस्त्वयुजास्वृचाम्।
प्र देवत्रे(३०)ति सूक्तानां पञ्चानां कवषो मुनिः ॥१२।
ऐलूषो मौजवान् वाचः प्रावेपा मे(३४)ति चोत्तरे।
लुशो मुनिः स धानाकस्त्वबुध्र(३५)मितिसूक्तयोः ॥१३।
नमो मित्रस्य(३७) सूक्तस्य सूर्यजोऽभितपा मुनिः।
अग्निन्न(३८)इति सूक्तस्य ऋषिरेन्द्र[क]स्तु मुष्कवान् ॥१४
यो वां परिज्मा(३९)सूक्तस्य रथ(४०)मित्युत्तरस्य च।
कक्षीवतः सुता घोषा ऋषिकेत्यत्र कीर्त्तिता ॥१५॥
समानमु त्यं(४१)[ख] धौषेयः सुहस्त्यो नाम वा ऋषिः।
अस्तेवे(४२)ति त्रिसूक्तानां कृष्ण आङ्गिरसो मुनिः ॥१६।
दिवस्परि(४५)प्र होते(४६)ति सूक्तयोरनयोरृषिः।
भालन्दनस्तु वत्सप्रि[ग]र्जगृभ्मे(४७)त्युत्तरस्य तु ॥१७॥
सप्तगुर्नाम विज्ञेयो मुनिरङ्गिरसः सुतः।
अहम्भुव(४८) मुपक्रम्य सूक्तानां त्रितयं प्रति ॥१८॥

(क) इन्द्र इति सर्व्वानुक्रमणी, ऋनुक्रमणिकाविवरणञ्च।
(ख) समानमु त्ये इति घ॰ च॰ ज॰।
(ग) वत्सप्रीरिति सर्व्वानुक्रमणी। वत्सः प्रिय इति अनुक्रमणिकाविवरणम्।

अनयोरुत्तरे सूक्ते लौक्यो (क)वा स बृहस्पतिः ॥२८॥
अदितिर्वा दक्षपुत्री मुनिरित्यवगम्यताम् ।
ऋषिः शाक्तो गौरिवीतिर्जनिष्ठा(७३) इति सूक्तयोः ॥२९॥
सिन्धुक्षित्प्रैयमेधो(ख)ऽयं प्र सु वः(७५) सूक्त उत्तरे ।
ऐरावतो जरत्कर्ण आ व ऋञ्जस(७६) उत्तरे ॥३०॥
भृगुपुत्रः स्यूमरश्मिरश्वमुष(७७) इति द्वयोः ।
अग्निर्वैश्वानरो वायं स सौचीकोऽग्निरेव वा ॥३१॥
सप्तिर्वाजम्भरो वायमपश्य(७९)मिति सूक्तयोः ।
भौवनो विश्वकर्मायं य इमे(८१)त्यादिसूक्तयोः ॥३२॥
ऋषिस्तु तापसो मन्युर्यस्ते मन्य(८३)विति द्वयोः ।
सत्येनोत्तभिता(८५)सूक्तं सूर्या सावित्र्यार्षं तत् ॥३३॥
वि ही(८६)ति सूक्तमिन्द्राण्या इन्द्रस्य च वृषाकपेः ।
वि हि सोतोः(८६,१)(ग)किं सुबाहु(८६,८) विन्द्राणी (८६,११)
नाह(८६,१२)मित्यृचां ॥३४॥
अयमेमी(८६,१९)ति चारभ्य तथा चतसृणामृचाम् ।
उक्ष्णो ही(८६,१४)त्यनया साकं नवानामिन्द्र एव दृक् ॥३५॥
उवे अम्ब सुलाभिके(८६,७) वृषाकपायि रेवति(८६,१३) ।
पर्शुर्ह(८६,२३)ति तिसृणां च ऋषिरैन्द्रो वृषाकपिः ॥३६॥
एकादशानां शिष्टानामिन्द्राणी सा पुलोमजा ।

---

(क) लौक्य इति सर्वानुक्रमणी ।
(ख) प्रियमेध इति अनुक्रमणिकाविवरणम् ।
(ग) वि हि सोतो(८६, १)रित्यादिविशेषकथनं सर्वानुक्रमण्यनुक्रमणिकाविवरणयोर्न दृश्यते । वेदार्थदीपिका तु यथायथमाह स्म ।

पायूरक्षोहणे(८७)[क] सूक्ते भरद्वाजसुतो मुनिः ॥३७॥
हविष्यान्तस्य(८८)[ख] सूक्तस्य मूर्द्धन्वान्नाम दर्शितः[ग] ।
अयन्त्वङ्गिरसः पुत्रो वामदेव्योऽथवा पुनः ॥३८॥
विश्वामित्रसुतो रेणुः सूक्तस्येन्द्रं स्तवे(८९)त्यृषिः ।
सहस्रशीर्षा(९०) सूक्तस्य ऋषिर्नारायणः स्मृतः ॥३९॥
सञ्जागृवद्भि(९१)रित्यस्मिन् वैतहव्योऽरुणो मुनिः ।
यज्ञस्ये(९२)त्यस्य सूक्तस्य शार्य्यातो नाम मानवः ॥४०॥
महि द्यावे(९३)ति सूक्तस्य पार्थ्य[घ]स्तान्व ऋषिः स्मृतः ।
प्रैते(९४) सूक्तस्य सर्पोऽयं काद्रवेयोऽर्बुदो मुनिः ॥४१॥
उर्व्वशी च हये(९५) सूक्ते मुनिरैलः पुरूरवाः ।
ऐलस्य वाक्यमन्त्रेताः प्रथमाय चतुर्द्दशी ॥४२॥
तृतीया द्वादशी षष्ठी सप्तदश्या सहेति षट् ।
सचा य(९५,८)दिति तिस्रश्च उर्व्वश्या उत्तरा नव ॥४३॥
प्र ते मह(९६) इति त्वस्य वरुरङ्गिरसः सुतः ।
ऐन्द्रः सर्व्वहरिर्वायमृषिरित्यवगम्यताम् ॥४४॥
या ओषधी(९७)[ङ]स्तु सूक्तस्य ऋषिराथर्व्वणो भिषक् ।
आर्ष्टिषेणस्तु देवापिर्मुनिः सूक्ते वृहस्पते(९८) ॥४५॥

---

(क) मोक्षमूलरसम्पादितऋग्वेदे सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च रक्षोघ्नमिति पाठो वर्त्तते ।
(ख) मोक्षमूलरसम्पादितऋग्वेदे हविष्यान्तमिति पाठोऽस्ति ।
(ग) दर्शक इति पाठः सम्भवितुमर्हति ।
(घ) पार्थ इति सर्व्वानुक्रमणी ।
(ङ) औषधीरिति स० प० ।

कं नः (९९)सूक्तस्य वम्रस्तु वैखानस ऋषिः स्मृतः।
इन्द्र दृह्ये(१००)ति सूक्तस्य दुवस्युर्नाम वान्दनः ॥४६॥
उद्बुध्यध्व(१०१) बुधः सौम्यो भार्म्यश्वो मुद्गलः प्र ते(१०२)।
आशुः शिशान (१०३)सूक्तेऽस्मिन्नैन्द्रोऽप्रतिरथो मुनिः॥४७॥
असावि सोम(१०४) इत्यस्य वैश्वामित्रोऽष्टकस्त्वृषिः।
कदा(१०५) सूक्ते सुमित्रो वा दुर्मित्रो वा स कुत्सजः॥४८॥
उभा उ(१०६)सूक्ते भूतांशः काश्यपस्य सुतो मुनिः।
आविः (१०७)सूक्तस्य चैतस्य दिव्यो वाङ्गिरसः स्वयम्॥४९॥
प्राजापत्या दक्षिणा वा त्वृषिरित्यवगम्यताम्।
किमिच्छन्ती(१०८)ति सूक्तस्य पुजामासाम्स्चाम्टषि॥५०॥
अन्यायास्तु शुनी नाम सरमा पणयो (क)ऽसुजाम्।
तेऽवद(१०९)न्निति सूक्तस्य ब्रह्मजाया जुहूर्मुनिः॥५१॥
अथवोर्ध्वनाभा नाम ब्रह्मपुत्त ऋषिः स्मृतः।
समिद्धो अद्य(११०) सूक्तस्य जमदग्निर्भृगोः सुतः॥५२॥
रामस्तु जामदग्न्यो वा मुनिरित्यवगम्यताम्।
परे चत्वारि सूक्तानि वैरूपा ऋषयो विदुः॥५३॥
अष्टादंष्ट्रो मुनिस्तत्र सूक्तस्यास्य मनीषिण(१११)।
नभःप्रभेदन(ख) सूक्ते परे त्विन्द्र पिबे(११२)त्यृषिः॥५४॥
शतप्रभेदन(ग)सूक्ते तमस्ये(११३)ति तदुत्तरे।

---

(क) पणय इत्यस्य असुरा इति अनुक्रमणिकाविवरणे पठ्यते।
(ख) नभःप्रभेदन इति अनुक्रमणिकाविवरणम्।
(ग) शतप्रभेदनः इति घ० च०।

घर्म(११४)ति सूक्ते मध्रिसु घर्मो वा तत्र तापसः॥५५॥
चित्र इच्छिशोः (११५)सूक्तस्य वार्ष्टिहव्य उपस्तुतः।
पिबा सोम(११६)मिति तस्मिन् स्यौरो वाग्नियुतो मुनिः॥५६॥
अग्नियूपोऽथवा स्यौरो मुनिरित्यवगम्यताम्।
न वा उ देवाः(११७) सूक्तस्य भिक्षुराङ्गिरसः सुतः॥५७॥
अमहीयुसुतः सूक्तस्याग्ने हंसी(११८)त्युरुचयः।
इति वा(११९) इति सूक्तस्य मुनिरिन्द्रसुतो लवः॥५८॥
अथर्वणः सुतः सूक्ते तदिदास(१२०) बृहद्दिवः।
हिरण्यगर्भः सं(१२१) सूक्ते(क) प्रजापतिसुतो मुनिः॥५९॥
वसुं न(१२२)सूक्ते वासिष्ठो नाम्ना चित्रमहा ऋषिः।
अयं वेन(१२३)स्य सूक्तस्य वेनो नाम भृगोः सुतः॥६०॥
इमं न(१२४) इति सूक्तेऽस्मिन्निन्द्रः स्वयमृषिः स्मृतः।
अदेवाद्देव(१२४,१) इत्यादि तिसृणामग्निरत्र तु॥६१॥
अहं रुद्रेभि(१२५)रित्यस्मिन्नाम्भृणी नाम वागृषिः।
न तमंहो न(१२६) शैलूषिः(ख) सूक्ते कुल्मलबर्हिषः(ग)॥६२॥
अंहोमुग्वामदेव्यो वा ऋषिरित्यवगम्यताम्।
रात्री व्यख्य(१२७)दिति तस्मिन् सौभरः कुशिको(घ) मुनिः॥६३॥

---

(क) तत्सूक्ते इति घ० च० ञ०।
(ख) शैलोऽग्निरिति घ०, शैलोष्मिरिति ञ०।
(ग) कुल्मलबर्हिष इति ञ०। कुल्मलबर्हिष इति सर्वानुक्रमणी, अनुक्रमणिकाविवरणञ्च।
(घ) कश्चित् इति घ०।

भरद्वाजसुता रात्रिरथवा गम्यतामृषिः।
ममाग्न(१२८) इति सूक्तस्य विहव्योऽङ्गिरसः सुतः॥६४॥
नास(१२९)त्सूक्ते मुनिर्ज्ञेयः परमेष्ठी प्रजापतिः।
यो यज्ञः(१३०) सूक्ते[क] यज्ञस्तु प्राजापत्य ऋषिः स्मृतः॥६५॥
काक्षीवतः सुकीर्तिस्तु सूक्तेऽप प्राच(१३१) उत्तरे।
ईजानं(१३२) सूक्ते नार्मेधः शकपूत ऋषिः स्मृतः॥६६॥
प्रो ष्वस्मा(१३३) इति सूक्तस्य सुदाः पैजवनो मुनिः।
यौवनाश्वस्तु मान्धाता सूक्तस्योभे य(१३४)दित्यृषिः॥६७॥
इन्द्रोत्तमामथार्धर्चां(१३४,७) गोधा नारी ददर्श ह।
यस्मिन्(१३५) सूक्ते कुमारोऽयमृषिर्यामायनः स्वयम्॥६८॥
मुनयो वातरशना एकर्चाः सप्त केशिनः(१३६)।
जूतिश्च वातजूतिश्च विप्रजूतिर्वृषाणकः॥६९॥
करिक्रतैतशौ च द्रावस्यशृङ्गश्च सप्तमः।
उत(१३७) सूक्तं सप्तर्षय[ख] एकर्चा एव ते विदुः॥७०॥
तव त्य(१३८) इति सूक्तस्य अङ्गस्तूपिरुरोः सुतः।
विश्वावसुः सूर्य(१३९) सूक्ते मुनिर्गन्धर्व एव सः॥७१॥
अग्ने तवे(१४०)ति सूक्तस्य मुनिरग्निस्तु पावकः।
अग्ने अच्छे(१४१)ति सूक्तस्य मुनिरग्निस्तु तापसः॥७२॥
अयं(१४२) सूक्ते द्व्यचः शार्ङ्गा जरिता द्रोण उत्तरः।
सारिसृक्कः स्तम्बमित्रस्त एते पक्षिणो विदुः॥७३॥

(क) यो यज्ञसूक्ते इति ग॰ घ॰ ज॰।
(ख) भरद्वाजादयः सप्त २६६ पृष्ठतोऽवगन्तव्याः।

त्यं चि(१४३)सूक्तस्य साङ्ख्योऽत्रिरय(१४४)मित्युत्तरस्य तु।
तार्क्ष्यपुत्त्रः सुपर्णो वा मुनिर्यामायनोऽथवा ॥७४॥
स ऊर्ध्वकृशनो ज्ञेय इन्द्राणीमां खनाम्य(१४५)षिः।
ऐरम्मदो देवमुनिररण्यानी(१४६)त्यृषिः स्मृतः ॥७५॥
सुवेदा नाम शैरीषिः(क) अपश्यत्ते(१४७) सूक्ते मुनिः स्मृतः।
सुध्वाणाम(१४८)स्य सूक्तस्य वैन्यो नाम पृथुर्मुनिः ॥७६॥
सविता(१४९) सूक्तस्य चार्चन्(ख) हैरण्यस्तूप एव सः।
मृलीको नाम वासिष्ठः समिद्धश्चि(१५०)दित्यृषिः ॥७७॥
श्रद्धयाग्नि(१५१)रिति तस्य श्रद्धा कामायनी मुनिः।
भरद्वाजसुतः शासः शास इत्थे(१५२)त्यृषिः स्मृतः ॥७८॥
इन्द्रस्य मातरो यास्ता ऋषयो देवजामयः।
ईङ्खयन्ती(१५३)रिति तस्य शोमो(१५४) वैवस्वती यमी ॥७९॥
अरायि(१५५) सूक्तेऽस्यर्षिर्भारद्वाजः शिरिम्बिठिः(ग)।
अग्निं हिन्वन्तु नः(१५६) सूक्ते केतुरग्निसुतो मुनि ॥८०॥
इमा नु(१५७) भुवन आप्त्यः साधनो भौवनोऽथवा।
सूर्यो न(१५८) इति सूक्तस्य सौर्यश्चक्षुर्ऋषिः स्मृतः ॥८१॥
उदसौ(१५९) तस्य पौलोमी शची नाम मुनिः स्मृतः।
ऋषिस्तीमस्य(१६०) सूक्तस्य वैश्वामित्रस्तु पूरणः ॥८२॥
प्राजापत्यस्तु मुञ्चामी(१६१)त्यपश्यद्यक्ष्मनाशनः।

---

(क) शैलूषिरिति ग० घ० ङ०। अनुक्रमणिकाविवरणञ्च।

(ख) चार्चन्त इति ग० घ० ङ०।

(ग) शिरिम्बिठ इति सर्वानुक्रमणी।

रचोहायमृषिर्ब्राह्मो ब्रह्मणाग्नि(१६१)रसुख तु ॥८३॥
अचीभ्या(१६२)मिति सूक्तस्य काश्यपो विदृहा मुनिः।
प्रचेतास्तु जगौ सूक्तमपेही(१६४)त्यङ्गिरःसुतः ॥८४॥
देवाः कपोतः(१६५) सूक्तस्य कपोतो नैर्ऋतस्त्वृषिः।
ऋषभं मे(१६६)ति सूक्तस्य वैराज ऋषभो मुनिः ॥८५॥
शाक्करो वा स ऋषभस्त्वभेद्(१६७)मिति ह्युत्तरे।
विश्वामित्रजमदग्नी ऋषिर्गाधिनभार्गवौ ॥८६॥
वातायनो मुनिः सूक्तं वातस्ये(१६८)त्यनिलो जगौ।
मयोभूः(१६९) प्रवरः ऋक्षं काशीवत ऋषिर्जगौ ॥८७॥
विभ्राट्(१७०)सूक्तमिदं सौर्यो नाम्ना विभ्राडृषिर्जगौ।
इटतो(क) भार्गवः सूक्तं लन्यमिटतो(१७१) जगौ ॥८८॥
चीण्युत्तराणि सूक्तानि विदुरङ्गिरसस्त्रयः।
आयाह्या(१७२)ला(१७३)भि'(१७४)संवर्त्तो ध्रुवोऽभीवर्त्त इत्यमी॥८९॥
प्र वो ग्रावाण(१७५) इत्यस्मिन्नूर्ध्वग्रावार्बुदिर्मुनिः।
प्र सूनव(१७६) इति लस्य सूनुर्नामार्भवो मुनिः।९०॥
प्राजापत्यः पतङ्गोऽयं पतङ्गं(१७७) सूक्तमुक्तवान्।
अरिष्टनेमिस्तार्क्ष्योऽयं जगौ सूक्तं त्यमूष्वि(१७८)ति ॥९१॥
उत्तिष्ठते(१७९)ति चैकर्चाः सूक्तमेतत्त्रयो विदुः।
शिबिरौशीनरः पूर्वः काशिराजः प्रतर्दनः ॥९२॥
रौहिदश्वो वसुमना इत्येत ऋषयः क्रमात्।

---

(क) इटत इत्यत्र प्रथमायास्तसिल्।

प्र ससाहिष(१८०)[क] इत्यस्मिन्निन्द्रपुत्त्र ऋषिर्जयः ॥९३॥
प्रथो नाम स वासिष्ठो भारद्वाजश्च सप्रथः ।
घर्मः सौर्यस्त्र एकर्चाः प्रथः(१८१) सूक्त इमे विदुः ॥९४॥
बार्हस्पत्यस्तपुर्मूर्धा मुनिः सूक्ते बृहस्पतिः[ख](१८२) ।
प्राजापत्यस्य सूक्तन्तदपश्यन्त्वा(१८३) प्रजावतः ॥९५॥
विष्णुर्योनि(१८४)मिति तस्मिंस्त्वष्टा वा गर्भकृन्मुनिः ।
प्राजापत्योऽथवा विष्णुर्नेजमेषस्तदुत्तरे ॥९६॥
ऋषिः सत्यधृतिर्नाम महि(१८५) सूक्ते स वारुणिः ।
वात आ वातु(१८६) सूक्तस्य प्र नून(१८८)मिति[ग] तस्य च ॥९७॥
वत्सः श्येनस्य तावेतावग्निपुत्त्रावृषी पृथक् ।
आयङ्गौ(१८९)रिति सूक्तस्य सार्पराज्ञी मुनिः स्मृता[घ] ॥९८॥
मधुच्छन्दःसुतः सूक्त ऋत(१९०)मित्यघमर्षणः ।
संसं(१९१) सूक्ते संवनन ऋषिरङ्गिरसः सुतः ९९॥

---

(क) मोक्षमूलरसम्पादितऋग्वेदे प्र ससाहिषे इति पाठो विद्यते ।

(ख) बृहस्पताविति घ॰ च॰ ञ॰ ।

(ग) आर्षानुक्रमण्या, वात आ वातु, प्र नूनमिति सूक्तद्वयस्य वत्सः श्येनश्च इमौ द्वावृषी क्रमेण प्रदर्शितौ । प्राग्नये (१८७) इति सूक्तस्य ऋषिर्न प्रदर्शितः । सर्वानुक्रमण्यामनुक्रमणिकाविवरणे च, वात आ वातु इति सूक्तस्य वातायन उल ऋषिरभिहितः । प्राग्नये इति सूक्तस्य आग्नेयो वत्स ऋषि, प्र नूनमिति सूक्तस्य आग्नेय· श्येन ऋषिर्निर्दिष्टः ।

(घ) स्मृतेति घ॰ ।

गोधा घोषा विश्ववारा पालोपनिषन्निषत् ।
ब्रह्मजाया जुहूर्नामा अगस्त्यस्य स्वसादितिः ॥१००॥
इन्द्राणी चेन्द्रमाता च सरमा रोमशोर्वशी ।
लोपामुद्रा च नद्यश्च यमी नारी च शश्वती ॥१०१॥
श्रीर्लाक्षा सार्पराज्ञी वाक् श्रद्धा मेधा च दक्षिणा ।
रात्री सूर्या च सावित्री ब्रह्मवादिन्य ईरिताः ।
स गौतमो[क] वामदेवो याः खिलास्ता ऋचो जगौ ॥१०२॥

येर्वेदमन्त्राः सकलाः सुदृष्टा
येनार्षानुक्रमणी प्रदिष्टा ।
नमोऽस्तु तेभ्यो मुनिपुङ्गवेभ्यो
भवन्तु ते चापि मयि प्रसन्नाः ॥१०३॥

इति दशमं मण्डलम् ॥

इति शौनकाचार्यकृतार्षानुक्रमणी समाप्ता ॥

---

(क) स गौतम इति ज० ।

# अथ छन्दोऽनुक्रमणी ।

## प्रथमं मण्डलम् ।

ऋग्वेदगतसूक्तानां सूक्तस्थानामृचामपि ।
यानि छन्दांसि विद्यन्ते तानि वक्ष्यामि सम्प्रति ॥१॥
गायत्रं नव सूक्तानि मधुच्छन्दस आदितः ।
आनुष्टुभे परे ज्ञेये दशमैकादशे उभे ॥२॥
मेधातिथेस्तु सूक्तेषु गायत्रेषूत्तरे त्विति ।
पुरउष्णिक्[क] परानुष्टुप्[ख](१)तिस्रश्चान्या[ग] अनुष्टुभः ॥३॥
शुनःशेपस्य सूक्तानि गायत्राण्येव तत्र तु ।
त्रिष्टुभौ प्रथमस्याद्ये[घ] षष्ठ्याद्या[ङ]श्च तथा दश ॥४॥
उत्तमा[च] च चतुर्थस्य षोडशी[छ] चोत्तमस्य या ।
पञ्चन्तु पाङ्क्त[ज]माद्यास्तु पञ्चमे षड्[झ]नुष्टुभः ॥५॥
ऋगस्माकं शिशिशीना[ञ]मेषा पादनिचृन्मता ।

---

(१) सर्व्वानुक्रमण्यामनुक्रमणिकाविवरणे च सूक्तस्यास्य एकविंशसङ्ख्याकाया ऋचश्छन्दः प्रतिष्ठेत्युक्तम् ।

---

(क) सू० २३, ऋ० १९ । (ख) सू० २३, ऋ० २० । (ग) सू० २३, ऋ० २२, २३, २४ । (घ) सू० २४, ऋ० १, २ । (ङ) सू० २४, ऋ० ६, ७, ८, ९, १०, ११, १२, १३, १४, १५ । (च) सू० २७, ऋ० १३ । (छ) सू० ३०, ऋ० १६ । (ज) सू० २९ । (झ) सू० २८, ऋ० १, २, ३, ४, ५, ६ । (ञ) सू० ३०, ऋ० ११ ।

हिरण्यस्तूपसूक्तानि त्रैष्टुभान्यथ तत्र तु ॥६॥
प्रथमश्च चतुर्थश्च जागते[क] प्रथमे तयोः।
अष्टमी षोडशी चान्या[ख] त्रिष्टुभथ्यरमे पुनः ॥७॥
अन्त्या च नवमी[ग] चापि त्रिष्टुभावेव गम्यताम्।
उत्तमे तु जगत्याद्या[घ] नवमी[ङ] जगतीनिचृत् ॥८॥
कण्वस्य प्रथमं[च] सूक्तं चतुर्थं[छ] पञ्चमं[ज] च यत्।
प्रस्कण्वस्य च तान्ये[झ]व प्रगाथा बार्हता हृचाः ॥९॥
प्रस्कण्वस्य द्वितीय[ञ]श्च षष्ठ[ट]श्चानुष्टुभे उभे।
चतस्रश्चोत्तमस्यान्याः[ठ] काण्वस्यानुष्टुबुत्तमा[ड] ॥१०॥
सर्वा गायत्र्य एवान्याः काण्वप्रस्कण्वयोर्ऋचः।
सव्यस्य सप्त सूक्तानि[ढ] जागतान्येव तत्र तु ॥११॥
प्रथमस्य तृतीयस्य हृचोऽन्त्य[ण]स्त्रैष्टुभः स्मृतः।
त्वमाविथा[त]समं चत्रं[थ] तुभ्येदेते[द] सः श्रेष्ठधम्[ध] ॥१२॥
त्वं भुव[न]स्त्रिष्टुभस्त्वैता आर्चन्त्रे[प]त्यृचा सह।

---

(क) सू० ३१, ३४। (ख) सू० ३१, ऋ० ८, १६, १८। (ग) सू० ३४, ऋ० ९, १२। (घ) सू० ३५, ऋ० १। (ङ) सू० ३५, ऋ० ९। (च) सू० ३६। (छ) सू० ३९। (ज) सू० ४०। (झ) सू० ४४, ४७, ४८। (ञ) सू० ४५। (ट) सू० ४९। (ठ) सू० ५०, ऋ० १०, ११, १२, १३। (ड) सू० ४३, ऋ० ९। (ढ) सू० ५१, ५२, ५३, ५४, ५५, ५६, ५७। (ण) सू० ५१, ऋ० १४, १५; सू० ५३, १०, ११। (त) सू० ५४, ऋ० ६। (थ) सू० ५४, ऋ० ८। (द) सू० ५४, ऋ० ९। (ध) सू० ५४, ऋ० ११। (न) सू० ५२, ऋ० १३। (प) सू० ५२, ऋ० १५।

नोधसः प्रथमाः पञ्च(क) जगत्यस्त्रिष्टुभः पराः(ख) ॥१३॥
सर्वा उपोत्तमाः(ग) सूक्ता जागतं सूक्तमुत्तमम्(घ) ।
अत्रापि चोत्तमा ज्ञेया त्रिष्टुबेवेति तु स्थिरम्(ङ) ॥१४॥
पराशरस्य द्विपदा आपष्ठा(च)स्त्रिष्टुभः पराः(छ) ।
गौतमस्य तु सूक्तेषु द्वे पाङ्क्ते सप्तमाष्टमौ(ज) ॥१५॥
नवमं च जगत्यन्त्(झ) दशम(ञ)न्त्वथ जागतम् ।
प्रथम(ट)श्च द्वितीय(ठ)श्च गायत्रं पञ्चम(ड)न्त्विदम् ॥१६॥
तृतीय(ढ)श्च चतुर्थ(ण)श्च त्रैष्टुभे त्रैष्टुभौष्णिहौ ।
षष्ठस्याद्ये तृचौ ज्ञेयौ शिष्टा गायत्र्यः पराः(त) १७॥
एकादशस्य सूक्तस्य पूर्वावानुष्टुभौ तृचौ(थ) ।
औष्णिहास्तु(द) पराः पाङ्क्त(ध) गायत्र(न) त्रैष्टुभा(प)स्तृचाः ॥१८॥
विज्ञेयस्ततो बार्हतः प्रागाथस्त्वन्तमो(फ) तृचः ।
द्वादशं(ब) जागतं सूक्तं त्रिष्टुबन्त्या च पञ्चमी(भ) ॥१९॥

---

(क) सू० ५८, ऋ० १, २, ३, ४, ५। (ख) सू० ५८, ऋ० ६, ७, ८, ९। (ग) सू० ५९, ६०, ६१, ६२, ६३। (घ) सू० ६४। (ङ) सू० ६४, ऋ० १५। (च) सू० ६५, ६६, ६७, ६८, ६९, ७०। (छ) सू० ७१, ७२, ७३। (ज) सू० ८०, ८१। (झ) सू० ८२, ऋ० ६। (ञ) सू० ८३। (ट) सू० ७४। (ठ) सू० ७५। (ड) सू० ७८। (ढ) सू० ७६। (ण) सू ७७। (त) सू० ७९, ऋ० १, २, ३। ४, ५, ६। ७, ८, ९। (थ) सू० ८४, ऋ० १, २, ३, ४, ५, ६। (द) सू० ८४, ऋ ७, ८, ९। (ध) सू० ८४, ऋ० १०, ११, १२। (न) सू० ८४, ऋ० १३, १४, १५। (प) सू० ८४, ऋ० १६, १७, १८। (फ) सू० ८४, ऋ० १९, २०। (ब) सू० ८५। (भ) सू० ८५, ऋ० ५, १२।

त्रयोदशस्य[क] गायत्रं जागतं तदनन्तरम्[ख] ।
प्रस्तारपङ्क्ती आद्यन्त्ये[ग] आ विद्युन्मद्भिरस्य तु ॥२०॥
त्रिष्टुभस्तु द्वितीयाद्या[घ] विराड्रूपा तु पञ्चमी[ङ] ।
षोडशं जागतं[च] त्वस्य द्वयान्त्य[छ]स्त्रैष्टुभः स्मृतः ॥२१॥
षष्ठी[ज]त्वेका विराट्स्थाना सा च स्वस्ति न इत्यसौ ।
ऋजुनीती[झ]ति गायत्रन्त्वस्यैकानुष्टुबुत्तमा[ञ] ॥२२॥
पराणि[ट]त्रैष्टुभान्येव तथापि प्रथमे पुनः ।
त्वं सोमासी[ठ]ति गायत्र्यो द्वादशोष्णिक्ततः परा[ड] ॥२३॥
चतु[ढ]र्जगत्यः प्रथमा उपान्त्यान्त्याः[ण] षडुष्णिहः ।
उत्तमस्य तु सूक्तस्य तिस्रोऽ[त]नुष्टुभ आदितः ॥२४॥
नवमीप्रभृति[थ]स्तस्य गायत्र्योऽस्य परस्तृचः ।
कुत्ससूक्तेषु गायत्रं चतुर्थं[द] त्रैष्टुभेष्वथ ॥२५॥
पाङ्क्तं द्वादशमं[ध] सूक्तमुद्धृत्यान्त्यान्तथाष्टमीम् ।
महापङ्क्त्यष्टमी[न] सा यवमध्या च योद्धृता ॥२६॥

---

(क) सू॰ ८६। (ख) सू॰ ८७। (ग) सू॰ ८८, ऋ॰ १, ६। (घ) सू॰ ८८, ऋ॰ २, ३, ४। (ङ) सू॰ ८८, ऋ॰ ५। (च) सू॰ ८९। (छ) ८९, ऋ॰ ८, ९, १०। (ज) सू॰ ८९, ऋ॰ ६। (झ) सू॰ ९०। (ञ) सू॰ ९०, ऋ॰ ९। (ट) सू॰ ९१, ९२, ९३। (ठ) सू॰ ९१, ऋ॰ ५, ६, ७, ८, ९, १०, ११, १२, १३, १४, १५, १६। (ड) सू॰ ९१, ऋ॰ १७। (ढ) सू॰ ९१, ऋ॰ १, २, ३, ४। (ण) सू॰ ९१, ऋ॰ १८, १९, २०, २१, २२, २३। (त) सू॰ ९३, ऋ॰ १, २, ३। (थ) सू॰ ९३, ऋ॰ ९, १०, ११। (द) सू॰ ९७। (ध) सू॰ १०५। (न) सू॰ १०५, ऋ॰ ८।

प्रथम[क]ञ्चैकविंश[ख]ञ्च नवम[ग]ञ्चाष्टमं[घ] ततः ।
ऊर्ध्व[ङ]ञ्च षोडश चौणि[च] सप्तर्चञ्च त्रयोदशम्[छ] ॥२७॥
एतानि जागतान्येषु प्रथमेऽन्त्यं तृचं[ज] विना ।
एकोनविंशे[झ] चैकविंशे[ञ] तथैवान्त्यं तृचं विना ॥२८॥
षृचं त्रयोदशे[ट] त्वन्त्यां नवमे[ठ]ऽष्टादशे[ड] विना ।
ततं मे पञ्चमीं चान्या[ढ]मष्टमेऽन्त्यौ तृचौ[ण] विना ॥२९॥
कक्षीवतस्तु सूक्तेषु चतुर्थं[त] तस्य जागतम् ।
उपोत्तमस्य चर्चौ द्वे चतुर्थी पञ्चमी[थ] च या ॥३०॥
पञ्चमस्य तु गायत्र्यस्तिस्रोऽन्त्याः प्रथमा[द] च या ।
अनुष्टुभौ विराजौ वा नवमी चाष्टमी[ध] च या ॥३१॥
अनुष्टुप्तु चतुर्थी[न] च सप्तमी[प] बृहती विराट् ।
तृतीया पञ्चमी षष्ठी द्वितीया[फ] चोष्णिहाचरे. ॥३२॥
गायत्री वा द्वितीया[ब]स्य तृतीया[भ] नुष्टुवेव वा ।

---

(क) सू॰ ६४ । (ख) सू॰ ११४ । (ग) सू॰ १०२ । (घ) सू॰ १०१ । (ङ) सू॰ ११४ । (च) सू॰ ११०, १११, ११६ । (छ) सू॰ १०६ । (ज) सू॰ ६४, ऋ॰ १५, १६ । (झ) सू॰ ११३, ऋ॰ १६, २० । (ञ) सू॰ ११५, ऋ॰ १०, ११ । (ट) सू॰ १०६, ऋ॰ ७ । (ठ) सू॰ १०२, ऋ॰ ११ । (ड) सू॰ १११, ऋ॰ ५ । (ढ) सू॰ ११०, ऋ॰ ५, ६ । (ण) सू॰ १०१, ऋ॰ ८, ६, १०, ११ । (त) सू॰ ११६ । (थ) सू॰ १२५, ऋ॰ ४, ५ । (द) १२०, ऋ॰ १, १०, ११, १२ । (ध) सू॰ १२०, ऋ॰ ८, ६ । (न) १२०, ऋ॰ ४ । (प) सू॰ १२०, ऋ॰ ७ । (फ) सू॰ १२०, ऋ॰ २, ३, ५, ६ । (ब) सू॰ १२०, ऋ॰ २ । (भ) सू॰ १२०, ऋ॰ ३ ।

सप्तमस्य विराड्रूपे श्रुत मे[क] आव[ख] इत्यृचौ ॥२२॥
उत्तमस्य तु सूक्तस्य द्वे वाय्वन्त्ये[ग] अनुष्टुभौ ।
अवशिष्टानि सूक्तानि[घ] त्रैष्टुभान्यवगम्यताम् ॥२४॥
आत्यष्टान्यथ सूक्तानि परुच्छेपस्य तत्र तु ।
आद्यस्यातिधृति षष्ठी[ङ] सुषुमे[च]त्यतिशाक्करम् ॥२५॥
सद्य प्रभा व[छ] इत्युभ्या तृतीया[ज]त्यष्टिरुत्तमा[झ] ।
अष्टमस्यान्त्यया[ञ] साक नवमस्याप्युपोत्तमे[ट] ॥२६॥
चतुर्थस्योत्तमा[ठ] त्रिष्टुब्दशमस्यो[ड]त्तमस्य[ढ] च ।
सप्तमस्यादितस्त्रिष्टुबेकस्या[ण]नुष्टुभस्तृच[त] ॥२७॥
गायत्रौ[थ] च धृति[द]श्चैव बृहत्यन्त्यस्य पञ्चमौ[ध] ।
द्वे सूक्ते दीर्घतमस प्रथमे[न] जागते तयो ॥२८।
पूर्वस्य दशमी[प] त्रिष्टुबथ चानुष्टुभ परम्[फ] ।
षष्ठञ्च जागत सूक्त चतुर्थ पञ्चम[ब] च यत् ॥२९॥

---

(क) सू० १२२ ऋ० ६। (ख) सू० १२२ ऋ० ५। (ग) सू० १२६, ऋ० ६, ७। (घ) सू० १६, १७, १८, २१, २३, २४, २५। (ङ) सू० १२७, ऋ० ६। (च) सू० १३०। (छ) सू० १२९, ऋ० ८, ९। (ज) सू० १२९, ऋ० ३। (झ) सू० १२९, ऋ० ११। (ञ) सू० १३४, ऋ० ६। (ट) सू० १३५, ऋ० ७, ८। (ठ) सू० १३०, ऋ० १०। (ड) सू० १३६, ऋ० ७। (ढ) सू० १३९, ऋ० ११। (ण) सू० १३३, ऋ० १। (त) सू० १३३, ऋ० २, ३ ४। (थ) सू० १३३ ऋ० ५। (द) सू० १३३, ऋ० ६। (ध) सू० १३९, ऋ० ५। (न) सू० १४०, १४१। (प) सू० १४०, ऋ० १०। (फ) सू० १४२। (ब) सू० १४३, १४४, १४५।

वैराजं दशमं[क]तस्मात्परे औष्णिह[ख]जागते[ग] ।
जागतानि तु सूक्तानि षोडशप्रभृतीनि षट्[घ] ॥४०॥
अनुष्टुबन्तादन्यानि वस्व रुद्रेति त्रैष्टुभात्[ङ] ।
त्रयोविंशस्य सूक्तस्य सह षष्ठ्या तृतीयया[च] ॥४१॥
अस्य वामीय सूक्तस्य जगत्यः षडिमा ऋचः ।
पञ्चपादं[छ] साकं जानां[ज] यद्गायत्रे[झ]अयं स[ञ] च ॥४२॥
सप्तार्धगर्भा[ट] गौरी[ठ]श्च तस्यानुष्टुबुपोत्तमा[ड] ।
प्रस्तारपङ्क्तिस्तु विराड्द्वाचत्वारिंशृग[ढ]स्य या ॥४३॥
अतोऽन्यत्त्रैष्टुभं सर्व्वं शिष्टमत्रावगम्यताम् ।
अत्र द्वित्रिष्टुबन्तानि प्रथमे द्वे[ण] अबोधि[त] च ॥४४॥
त्रिष्टुबन्तानि चैतानि जागतेषु प्रतव्यसीम्[थ] ।
तं पृच्छत[द] किमु श्रेष्ठ[ध] इति त्रीण्यवगम्यताम् ॥४५॥
अगस्त्यस्य च सूक्तेषु गायत्रं सूक्तमष्टमम्[न] ।
द्वितीयं जागतं सूक्तं द्वृच[प]मुद्धृत्य तूत्तमम् ॥४६॥
अष्टादशं[फ] चतुर्थ[ब]श्च द्वे एते जागते तयोः ।

---

(क) सू॰ १४९ । (ख) सू॰ १५० । (ग) सू॰ १५१ । (घ) सू॰ १५५, १५६, १५७, १५९, १६०, १६१ । (ङ) सू॰ १५८ । (च) सू॰ १६२, ऋ॰ ३, ६ । (छ) सू॰ १६४, ऋ॰ १२ । (ज) सू॰ १६४, ऋ॰ १५ । (झ) सू॰ १६४, ऋ॰ २३ । (ञ) सू॰ १६४, ऋ॰ २९ । (ट) सू॰ १६४, ऋ॰ ३६ । (ठ) १६४, ऋ॰ ४१ । (ड) सू॰ १६४, ऋ॰ ५१ । (ढ) सू॰ १६४, ऋ॰ ४२ । (ण) सू॰ १४०, ऋ॰ १२, १३ । सू॰ १४१, ऋ॰ १२, १३ । (त) सू॰ १४७, ऋ॰ ५, ६ । (थ) सू॰ १४३, ऋ॰ १ । (द) १४५, ऋ॰ १ । (ध) सू॰ १६१, ऋ॰ १ । (न) सू॰ १७२ । (प) सू॰ १६६, ऋ॰ १४, १५ । (फ) सू॰ १८२ । (ब) सू॰ १६८ ।

आद्यादुद्धृत्य पथ्यन्त्ये[क] चतुर्थाद्योत्तमं तृचम्[ख] ॥४७॥
षष्ठ[ग]मेकादश[घ]ञ्चास्य सूक्ते आनुष्टुभे परे।
उभयोरुत्तमा[ङ] त्रिष्टुबाद्या[च] तु बृहती तयोः ॥४८॥
एकादशे[छ]ऽस्य बृहती स्कन्धोग्रीवीति गम्यताम्।
पञ्चमस्य तु सूक्तस्य द्वितीया[ज] ह्यृग्विराट् स्मृता ॥४९॥
द्वादशस्योत्तमा[झ]त्रिष्टुप् शिष्टाः सर्वा अनुष्टुभः।
एका पञ्चदशे सूक्ते पञ्चमी[ञ] बृहतीनिवृत् ॥५०॥
त्रयोविंश[ट]न्तु गायत्रं तस्योष्णिक् प्रथमा[ठ] तु त्वृक्।
अनुष्टुब्गर्भरूपोष्णिगथवैषा[ड]वगम्यताम् ॥५१॥
तृतीया पञ्चमी षष्ठी सप्तमी[ढ]ता अनुष्टुभः।
अनुष्टुब्बृहती चान्या[ण] गायत्रं सूक्तमुत्तरम्[त] ॥५२॥
विज्ञेय उत्तमे सूक्ते दशमीप्रभृतितृचः[थ]।
आनुष्टुभं महापाङ्क्तो महा च बृहती परा[द]।
अवशिष्टानि सूक्तानि [ध]त्रैष्टुभान्यवगम्यताम् ॥१५३॥

इति प्रथमं मण्डलम्।

(क) सू॰ १८२, ऋ॰ ६, ८। (ख) सू॰ १६८, ऋ॰ ८, ९, १०
(ग) सू॰ १७०। (घ) १७५। (ङ) सू॰ १७०, ऋ॰ ५, सू॰ १७
ऋ॰ ६। (च) सू॰ १७०, ऋ॰ १, १७५, १। (छ) सू॰ १७५, ऋ॰ १
(ज) सू॰ १६९, ऋ॰ २। (झ) १७६ ऋ॰ ६। (ञ) सू॰ १७९, ऋ॰ ५
(ट) सू॰ १८७। (ठ) सू॰ १८७, ऋ॰ १। (ड) सू॰ १८७, ऋ॰ २
(ढ) सू॰ १८७, ऋ॰ ३, ५, ६, ७। (ण) सू॰ १८७, ऋ॰ ११। (त
सू॰ १८८। (थ) सू॰ १९१, ऋ॰ १०, ११, १२। द) सू॰ १९
ऋ॰ १६। (ध) सू॰ ६६, ६७, ६९, ७१, ७२, ७३, ७४, ७५, ७८, ७
८०, ८१, ८३, ८४, ८५, ८६, ८९, ९०।

## अथ द्वितीयं मण्डलम् ।



सूक्तं गृत्समदस्याथ प्रथमे(क) जागते उभे ।
आश्वपांशी(ख)ति ऋचौ द्वे तृतीये त्रैष्टुभे सति ॥१॥
त्रैष्टुभानुष्टुभे तस्य चतुर्थं पञ्चमं(ग) च यत् ।
गायत्र(घ) माष्टमात्सर्वं तत्रैकानुष्टुबुत्तमा(ङ) ॥२॥
ऊर्ध्वं चत्वारि(च) षड्विंशादूर्ध्वञ्च द्वे(छ) त्रयोदशात् ।
त्रीणि(ज) सप्तदशादूर्ध्वमूर्ध्वं चत्वारि(झ) चाष्टमात् ॥३॥
सर्वाण्येतानि सूक्तानि त्रैष्टुभानि त्रयोदश ।
उत्तमस्योत्तमा(ञ)मेषामुद्धृत्य जगतीमृचम् ॥४॥
विश्वं सत्य(ट)मिति त्रिष्टुब्बृहस्पते अती(ठ)ति च ।
अतोऽन्यच्चागतं सूक्तं आगाते पित(ड)रित्यतः ॥५॥

---

(क) सू० १, २। (ख) सू० ३, ऋ० ६, ७। (ग) सू० ४, ५। (घ) सू० ६, ७, ८। (ङ) सू० ८, ऋ० ६। (च) सू० २६, २७, २८, २९। (छ) सू० १४, १५। (ज) सू० १८, १९, २०। (झ) सू० ९, १०, ११, १२। (ञ) सू० ४३, ऋ० ३। (ट) सू० २४, ऋ० १२। (ठ) सू० २३, ऋ० १५। (ड) सू० ३३।

अथ्या[क]दि सूक्तमुद्धृत्य द्वाविंश[ख]मतिशाकरम ।
अष्टिपञ्चपदावन्त्ये[ग] तृतीयः[घ] षोडशाक्षरः ॥६॥
सिनीवालि[ङ] यासुबाऊ[च] यांगुङ्गुरि[छ]त्यनुष्टुभः ।
त्रैष्टुभस्य तु शेषस्य चतुर्थं[ज] पञ्चमं[झ] च यत् ॥७॥
जागतानि द्वितीयञ्च[ञ] द्वितीयास्त्वत्त उत्तमम्[ट](१) ।
गायत्रं नवमं[ठ] तस्य सारस्वत्या[ड]वनुष्टुभौ ॥८॥
इमा ब्रह्मे[ढ]ति बृहती योद्धृता[ण] सातिशक्वरी ।
तदस्मै द्वित्रिष्टुबन्तं[त] सूक्तं सप्तदशन्तु यत् ॥९॥
त्रयोदशं चतुस्त्रिंशमेकत्रिंशं च षोडशम् ।
एकविंशं त्रयोविंशं चतुर्विंशञ्च सप्त तु ॥१०॥
एतानि[थ] त्रिष्टुबन्तानि गम्यतां जागतेष्वपि ॥२म०॥

इति द्वितीयं मण्डलम् ।

---

(१) पञ्चमोत्तर उत्तमे(द) इति पाठः सम्भवितुमर्हति ।

---

(क) सू० २२, ऋ० १ । (ख) सू० २२ । (ग) सू० २२, ऋ० ४ । (घ) सू० २२, ऋ० ३ । (ङ) सू० ३२, ऋ० ६ । (च) सू० ३२, ऋ० ७ । (छ) सू० ३२, ऋ० ८ । (ज) सू० २३, ३६ । (झ) सू० २४, ३७ । (ञ) सू० २१, ३४ । (ट) सू० २६ । (ठ) सू० ४१ । (ड) सू० ४१, ऋ० १६, १७ । (ढ) सू० ४१, ऋ० १८ । (ण) सू० ४३, ऋ० २ । (त) सू० १७, ऋ० ८, ९ । (थ) सू० १३, ऋ० १३, सू० ३४, ऋ० १५; सू० ३१, ऋ० ७, सू० १६, ऋ० ९; सू० २१, ऋ० ५; सू० २३, ऋ० १८; सू० २४, ऋ० १६ । (द) सू० २५, २६ ।

| | | | |
|---|---|---|---|
| Pingala Chhandah Sutra (Sans) Fasc II—III @ /6/ each | Rs | 0 | 1 |
| Prithiráj Rasau, (Sans) Part I Fasc. I Part II, Fasc I—V @ /6/ each | | 2 | 2 |
| Ditto (English) Part II Fasc I | | 0 | 12 |
| Prákrita Lakshanam (Sans) Fasc I | | 1 | 8 |
| Parasara Smriti (Sans) Vol I, Fasc 1—8, Vol II, Fasc 1—4 Vol III Fasc 1—2 @ /6/ each | | 5 | 4 |
| Parasara, Institutes of (English) | | 0 | 12 |
| Srauta Sutra of Apastamba, (Sans) Fasc I—XII @ /6/ each | | 4 | 8 |
| Ditto Asvalayana, (Sans) Fasc I—XI @ /6/ each | | 4 | 2 |
| Ditto Latyáyana (Sans) Fasc I—IX @ /6/ each | | 3 | 6 |
| Ditto Sankhayana (Sans) Vol I, Fasc 1—7, Vol. II, Fasc. 1—2, @ /6/ each | | 3 | 6 |
| Sama Veda Samhita, (Sans) Vols I Fasc 5—10 II, 1—6 III, 1—7 IV 1—6, V 1—8 @ /6 each Fasc. | | 12 | 6 |
| Samkhya Sutra Vritti (Sans) Fasc I—IV @ /6/ each | | 1 | 8 |
| Sahitya Darpana (English) Fasc I—IV @ /6 each | | 1 | 8 |
| Sankhya Aphorisms of Kapila, (English) Fasc I and II @ /6 each | | 0 | 12 |
| Sarva Darsana Sangraha (Sans) Fasc II | | 0 | 6 |
| Sankara Vijaya, (Sans) Fasc II and III @ /6 each | | 0 | 12 |
| Sankhya Pravachana Bhashya, Fasc III (English preface only) | | 0 | 6 |
| S'ri Bhashyam (Sans) Fasc I—II | | 0 | 12 |
| Susruta Samhita (Eng) Fasc I and II @ /12 each | | 1 | 8 |
| Taittiriya Aranya (Sans) Fasc I—XI @ /6/ each | | 4 | 2 |
| Ditto Brahmana (Sans) Fasc I—XXIV @ /6 each | | 9 | 0 |
| Ditto Samhita, (Sans) Fasc IX—XXXV @ /6/ each | | 10 | 2 |
| Ditto Pratisakhya (Sans) Fasc I—III @ /6 each | | 1 | 2 |
| Ditto and Aitareya Upanishads (Sans) Fasc II and III @ /6/ each | | 0 | 12 |
| Tandya Brahmana (Sans) Fasc I—XIX @ /6 each | | 7 | 2 |
| Tattva Chintamani Vol I Fasc 1—9 Vol II 1—7 (Sans) @ /6 each | | 6 | 0 |
| Tulsi Sat'sai (Sans) Fasc I—III | | 1 | 2 |
| Uttara Naishadha (Sans) Fasc III V—XII @ /6 each | | 3 | 6 |
| Uvasagadasao (Sans) Fasc I—VI @ /12 | | 4 | 8 |
| Varaha Purana (Sans) Fasc I—XIII @ /6/ each | | 4 | 14 |
| Vayu Purana, (Sans) Vol I Fasc I—VI Vol II Fasc I VII @ /6 each Fasc | | 4 | 14 |
| Vishnu Smriti (Sans) Fasc I—II @ /6 each | | 0 | 12 |
| Vivadaratnakara (Sans) Fasc I—VII @ /6 each | | 2 | 10 |
| Vrihannaradiya Purana, (Sans) Fasc I—6 @ /6 | | 2 | 4 |
| Yoga Sutra of Patanjali (Sans & English) Fasc I—V @ /14/ each | | 4 | 6 |

### *Tibetan Series*

| | | |
|---|---|---|
| Sher Phyin Vol I Fasc I—5 Vol II Fasc I—2 @ 1/ each | 7 | 0 |
| Pag Sam thi S'in, Fasc I—II @ 1 each | 2 | 0 |
| Rtogs brjod dpag bsam Akhri S'in (Tibetan & Sans) Vol I Fasc 1—3 @ 1/ Vol. II, Fasc 1 | 4 | 0 |

### *Arabic and Persian Series*

| | | |
|---|---|---|
| Alamgirnamah, with Index, (Text) Fasc I—XIII @ /6 each | 4 | 14 |
| Ain i Akbari (Text) Fasc. I—XXII @ 1/ each | 22 | 0 |
| Ditto (English) Vol I Fasc 1—7 Vol. II Fasc 1—2 | 15 | 12 |
| Akbarnamah, with Index, (Text) Fasc I—XXXVII @ 1/ each | 37 | 0 |
| Arabic Bibliography by Dr A. Sprenger | 0 | 6 |
| Badshahnamah with Index, (Text) Fasc I—XIX @ /6/ each | 7 | 2 |
| Catalogue of Persian books and MSS in the library of A. S. B., Fasc I | 1 | 0 |
| Dictionary of Arabic Technical Terms, and Appendix Fasc I—XXI @ 1/ each | 21 | 0 |
| Farhang i Rashidi (Text), Fasc. I—XIV @ 1/ each | 14 | 0 |
| Fihrist-i Tusi, or, Tusy's list of Shy'ah Books, (Text) Fasc I—IV @ /12/ each | 3 | 0 |
| Futuh ul-Sham Waqidi, (Text) Fasc. I—IX @ /6/ each | 3 | 6 |
| Ditto Azadi, (Text) Fasc I—IV @ /6/ each | 1 | [illegible] |
| Haft Asman, History of the P... | | |

BIBLIOTHECA INDICA;

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, No. 819



# बृहद्देवता ।

# BRIHAD-DEVATÁ.

## AN INDEX TO THE GODS OF THE RIG VEDA,

BY

SAUNAKA ACHARYA.

EDITED BY THE LATE

RAJA RAJENDRALALA MITRA, C. I. E., LL. D.

FASCICULUS IV.

CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1892.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA**

AND OBTAINABLE FROM

THE SOCIETY'S LONDON AGENTS MESSRS KEGAN PAUL, TRENCH, TRUBNER & CO, LD

PATERNOSTER HOUSE, CHARING CROSS ROAD, LONDON, W C

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock*

## BIBLIOTHECA INDICA

### *Sanskrit Series*

| | | |
|---|---|---|
| Advaita Brahma Siddhi (Text) Fasc. I—IV @ 6/ each | Rs. 1 | 8 |
| *Agni Purána, (Text) Fasc. II—XIV @ /6/ each | 4 | 14 |
| Aitareya Aranyaka of the Rig Veda, (Text) Fasc. I—V @ 6/ each | 1 | 14 |
| Anu Bháshyam (Text) Fasc I—II | 0 | 12 |
| Aphorisms of Sandilya, (English) Fasc I | 0 | 6 |
| *Aphorisms of the Vedanta, (Text) Fasc VII—XIII @ 6/ each | 2 | 10 |
| Ashtasahasriká Prajnaparamita (Text) Fasc. I—VI @ 6/ each | 2 | 4 |
| Aśvavaidyaka, (Text) Fasc I—V @ 6/ each | 1 | 14 |
| Avadána Kalpalata (Sans and Tibetan) Vol. I, Fasc I III; Vol II Fasc I @ 1/ | 4 | 0 |
| *Bhamati (Text) Fasc II—VIII @ 6/ each | 2 | 10 |
| Brahma Sutra, (English) Fasc I | 0 | 12 |
| Brihaddevata (Text) Fasc I—III @ 6/ each | 1 | 2 |
| Brihaddharma Purana (Text) Fasc I and II @ 6/ each | 0 | 12 |
| *Brihat Aranyaka Upanishad (Text) Fasc VI VII & IX @ 6/ each | 1 | 2 |
| * Ditto (English) Fasc II—III @ 6/ each | 0 | 12 |
| *Brihat Samhita, (Text Fasc II—III, V—VII @ 6/ each | 1 | 14 |
| *Chaitanya Chandrodaya Nátaka (Text) Fasc. II—III @ 6/ each | 0 | 12 |
| Chaturvarga Chintamani (Text) Vols. I Fasc 1—11 II, 1—25; III Part I Fasc 1—18 Part II Fasc 1—9 @ 6 each | 23 | 10 |
| *Chhandogya Upanishad (English) Fasc. II | 0 | 6 |
| *Dasarupa, (Text) Fasc II and III @ 6/ | 0 | 12 |
| Gopatha Brahmana (Text) Fasc I—II | 0 | 12 |
| *Hindu Astronomy (English) Fasc. II—III @ 6/ each | 0 | 12 |
| Kala Mádhaba (Text) Fasc I—IV @ 6 each | 1 | 8 |
| Katantra, (Text) Fasc I—VI @ 12/ each | 4 | 8 |
| Katha Sarit Sagara, (English) Fasc I—XIV @ /12/ each | 10 | 8 |
| *Kaushitaki Brahman Upanishads (Text Fasc II | 0 | 6 |
| Kurma Purana (Text) Fasc I—IX @ 6 each | 3 | 6 |
| *Lalita Vistara, (Text) Fasc III—VI @ 6/ each | 1 | 8 |
| Ditto (English) Fasc I—III @ 12 each | 2 | 4 |
| Madana Parijata (Text) Fasc I—IX @ 6 each | 3 | 6 |
| Manutiká Sangraha, (Text) Fasc I—III @ 6/ each | 1 | 2 |
| *Markandeya Purana, (Text) Fasc. IV—VII @ 6 each | 1 | 8 |
| Markandeya Purana (English) Fasc I—II @ /12/ each | 1 | 8 |
| *Mimamsá Darsana (Text) Fasc II—XIX @ 6 each | | 4 |
| *Narada Pancharátra, (Text Fasc IV | 6 | 12 |
| Nárada Smriti (Text) Fasc I—III @ 6 | 0 | 6 |
| Nyayavartika, (Text) Fasc I | 1 | 2 |
| *Nirukta, (Text) Vol I Fasc 4—6 Vol II Fasc 1—6; Vol III, Fasc 1—6; Vol IV, Fasc. 1—8 @ 6 each | 0 | 6 |
| *Nitisára, or The Elements of Polity By Kámandaki (Sans. ... | 8 | 10 |

